श्रीगणेशायनमः श्रीसरस्वत्यैनमः श्रीगुरुभ्योनमः श्रीमद्ग्रंथकृद्भ्योनमः धर्माधर्मेति ह्रिकारस्थयोपिक्लेशाः पंचप्राणिनामायतंते यस्मिन्नेतैर्नैपरामृ
ष्टईशोयस्तंवंदेविष्णुमोंकारवाच्यम् १ याज्ञवल्क्यमुनिभाषितंमुहुर्विश्वरूपविकटोक्तिविस्तृतम् धर्मशास्त्रमृजुभिर्मिताक्षरैर्बालबुद्धिविधयेविविच्यते
२ याज्ञवल्क्यशिष्यः कश्चित्प्रश्नोत्तररूपंयाज्ञवल्क्यप्रणीतंधर्मशास्त्रंसंक्षिप्यकथयामास यथामनुनोक्तंभृगुः तस्यचायमाद्यश्लोकः योगिनांसनकादी
नामीश्वरः श्रेष्ठस्तंयाज्ञवल्क्यसंज्ञंसंपूज्यमनोवाक्कायकर्मभिः पूजयित्वामुनयः सामश्रवःप्रभृतयःश्रवणधारणयोग्याअब्रुवन्उक्तवंतः धर्मानस्मभ्यं-
ब्रूहीति कथंअशेषतःकार्त्स्न्येन केषांवर्णाश्रमेतराणां वर्णाब्राह्मणादयः आश्रमाब्रह्मचारिप्रभृतयः इतरेअनुलोमप्रतिलोमजातामूर्धावसिक्तादयः इ

श्रीगणेशायनमः योगीश्वरंयाज्ञवल्क्यंसंपूज्यमुनयोब्रुवन् वर्णाश्रमेतराणांनोब्रूहिधर्मानशेषतः १

तरशब्दस्यद्वंद्वेचेतिसर्वनामसंज्ञाप्रतिषेधः अत्रचधर्मशब्दःषड्विधस्मार्त्तधर्मविषयः तद्यथा वर्णधर्मः आश्रमधर्मः वर्णाश्रमधर्मः गुणधर्मः निमित्तधर्मः
साधारणधर्मश्चेति तत्रवर्णधर्मोनित्यमद्यंब्राह्मणोवर्जयेदित्यादिः आश्रमधर्मअग्नीधनभैक्षचर्यादिः वर्णाश्रमधर्मः पालाशोदंडोब्राह्मणस्येत्येवमादिः
गुणधर्मःशास्त्रीयाभिषेकादिगुणयुक्तस्यराज्ञःप्रजापालनादिः निमित्तधर्मोविहिताकरणप्रतिषिद्धसेवननिमित्तंप्रायश्चित्तं साधारणोधर्मः अहिंसादिः
नहिंस्यात्सर्वभूतानीत्याचांडालंसाधारणोधर्मः श्रुत्युक्तः शौचाचारांश्चशिक्षयेदित्याचार्यकरणविधिप्रयुक्तत्वाद्धर्मशास्त्राध्ययनस्यप्रयोजनादिकथनं

शिष्येणतदध्ययनकर्त्तव्यमितिकुतोवगम्यतइत्यतआह पुराणंब्राह्मादि न्यायस्तर्कविद्या मीमांसावेदवाक्यविचारः धर्मशास्त्रंमानवादि अंगानिव्याकरणा
दीनिषट् एतैरुपेताश्चत्वारोवेदाः विद्या पुरुषार्थसाधनज्ञानानितासांस्थानानिचचतुर्दश धर्मस्यचचतुर्दशस्थानानिहेतव एतानिचत्रैवर्णिकैरध्येतव्यानि
तदंतर्भूतत्वाद्धर्मशास्त्रमप्यध्येतव्य तत्रैतानिब्राह्मणेनविद्याप्राप्तयेधर्मानुष्ठानायचाधिगन्तव्यानि क्षत्रियवैश्याभ्यांधर्मानुष्ठानाय तथाचशंखेनविद्यास्थाना
न्यनुक्रम्योक्तं एतानिब्राह्मणोधिकुरुतेसचवृत्तिंदर्शयेन्नेतरेषामिति मनुरपिद्विजातीनांधर्मशास्त्राध्ययनेधिकारोब्राह्मणस्यप्रवचनेनान्यस्येतिदर्शयति निषे

पुराणन्यायमीमांसाधर्मशास्त्रांगमिश्रिताः वेदाःस्थानानिविद्यानांधर्मस्यचचतुर्दश ३ मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोंगिराः
यमापस्तंबसंवर्त्ताःकात्यायनबृहस्पती ४ पराशरव्यासशंखलिखितादक्षगौतमौ शातातपोवसिष्ठश्चधर्मशास्त्रप्रयोजकाः ५

कादिश्मशानांतोमंत्रैर्यस्योदितोविधिः तस्यशास्त्रेधिकारोस्मिन्ज्ञेयोनान्यस्यकस्यचित् विदुषाब्राह्मणेनेदमध्येतव्यंप्रयत्नतः शिष्येभ्यश्चप्रवक्तव्यंसम्यङ्ना
न्येनकेनचिदिति ३ अस्तुधर्मशास्त्रमध्येतव्यंयाज्ञवल्क्यप्रणीतस्यास्यशास्त्रस्यकिमायातमित्यतआह उशनःशब्दपर्यंतोद्वंद्वैकवद्भावः याज्ञवल्क्यप्रणीत
मिदंधर्मशास्त्रमध्येतव्यमितिभावः नेयंपरिसंख्याकिंतुप्रदर्शनार्थमेतत् अतोबौधायनादेरपिधर्मशास्त्रत्वमविरुद्धम् एतेषांप्रत्येकंप्रामाण्येपिसाकां
क्षाणामाकांक्षापरिपूरणमन्यतःक्रियते विरोधेतुविकल्पः ४ ५ ६ ६ ६ ६ ६ ६ ६

कारकहेतुषुज्ञापकहेतुषु चासदेहेनिर्णयहेतुमाह चत्वारो ब्राह्मणा वेदशास्त्रधर्मज्ञा. पर्षत् तिस्रोविद्या अधीयंनइतित्रैविद्याः तेषांसमूहस्त्रैविद्य धर्मशास्त्र
त्वमत्राप्यनुवर्त्ततेनद्वापर्षत् सापूर्वोक्तापर्षत् यंब्रूतेसधर्म अध्यात्मज्ञानिषु निपुणतमोवेदधर्मशास्त्रज्ञश्च एकोपियंब्रूते सोऽपिधर्म ९ इत्युपोद्घातप्रकरण
एतैर्नवभिःश्लोकैः सकलशास्त्रोपोद्घातमुक्त्वाइदानीवर्णादीनाधर्मान्वक्तुंप्रथमंतावद्वर्णानाह ब्राह्मणक्षत्रियवैश्यशूद्राश्चत्वारोवर्णाःवक्ष्यमाणलक्षणास्तेषामा-
द्यास्त्रयोब्राह्मणक्षत्रियवैश्याद्विजाः द्विर्जायंतइतिद्विजाः तेषांद्विजानांवेएवनशूद्रस्य निषेकाद्याः निषेकोगर्भाधानमाद्योयासांतास्तथोक्ताः श्मशानंपितृवनंत-

चत्वारोवेदधर्मज्ञाः पर्षत्त्रैविद्यमेववा साब्रूतेयंसधर्मःस्यादेकोवाध्यात्मवित्तमः ९ ब्रह्मक्षत्रियविट्शूद्रावर्णास्त्वाद्यास्त्रयोद्विजाः नि
षेकाद्याःश्मशानांतास्तेषांवैमंत्रतःक्रियाः १० गर्भाधानमृतौपुंसःसवनंस्पंदनात्पुरा षष्ठेऽष्टमेवासीमंतोमास्येतेजातकर्मच ११ अहन्येकाद
शेनामचतुर्थेमासिनिष्क्रमः षष्ठेन्नप्राशनमासिचूडाकार्यायथाकुलं १२
स्संबंधिकर्मअंतोयासांताः क्रियामंत्रैर्भवंति १० इदानींताःक्रिया अनुक्रामति गर्भाधानमित्यनुगतार्थंकर्मनामधेयं एवंवक्ष्यमाणान्यपि तद्गर्भाधानमृतौऋतु-
कालेवक्ष्यमाणलक्षणे पुंसवनाख्यंकर्मगर्भचलनात्पूर्वं षष्ठेऽष्टमेवामासिसीमंतोन्नयनं एतेचद्वेपुंसवनसीमंतोन्नयने क्षेत्रसंस्कारकर्मत्वात्सकृदेवकार्येनप्रति
गर्भं यथाहदेवलः सकृत्संस्कृतानारीसर्वगर्भेषुसंस्कृतेति एते आद्यते आगलेगर्भकोशात्कुमारेजातेजातकर्म एकादशेऽहनिनामकरणं तच्चपितामहमातामह
ादिसंबद्धंकुलदेवतासंबद्धंवा यथाहशंखः कुलदेवतासंबद्धंपितानामकुर्यादिति चतुर्थेमासिनिष्क्रमलक्षणंकर्म सूर्यावेक्षणंकर्म षष्ठेमास्यन्नप्राशनंकर्म चू
डाकरणंतुयथाकुलंकार्यमितिप्रत्येकंसंबध्यते ११ १२

शौचाचारानाह कर्णस्थंब्रह्मसूत्रंयस्यसतथोक्तः कर्णश्चदक्षिणः पवित्रंदक्षिणेकर्णेकृत्वाविण्मूत्रमुत्सृजेदितिलिंगात् असावहनिसंध्ययो
श्चउदङ्मुखोमूत्रपुरीषेकुर्यात् चकाराद्भस्मादिरहितेदेशे रात्रौतुदक्षिणामुखः १६ किंच अनंतरंशिश्नंगृहीत्वाउत्थायउद्धृताभिरद्भिर्वक्ष्यमाण
लक्षणाभिर्मृद्भिश्चगंधलेपयोः क्षयकरंशौचंकुर्यात् अतंद्रितः अनलसः उद्धृताभिरितिजलांतःशौचनिषेधः अत्रगंधलेपक्षयकरमितिसर्वाश्रमिणां
साधारणंशौचमिदं मृत्संख्यानियमस्त्वदृष्टार्थः १७ शुचौअशुच्यद्रव्यासंस्पृष्टे देशेइत्यपादानादुपानच्छयनासनादिनिषेधः उपविष्टः नस्थितः नश

दिवासंध्यासुकर्णस्थब्रह्मसूत्रउदङ्मुखः कुर्यान्मूत्रपुरीषेचरात्रौचेद्दक्षिणामुखः १६ गृहीतशिश्नश्चोत्थायमृद्भिर
भ्युद्धृतैर्जलैः गंधलेपक्षयकरंशौचंकुर्यादतंद्रितः १७ अंतर्जानुःशुचौदेशउपविष्टउदङ्मुखः प्राग्वाब्राह्मेणतीर्थे
नद्विजोनित्यमुपस्पृशेत् १८ कनिष्ठादेशिन्यंगुष्ठमूलान्यग्रंकरस्यच प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् १९

यानः प्रह्वोगच्छन्वाउदङ्मुखः प्राङ्मुखोवेतिदिगंतरनिवृत्तिः शुचौदेशइत्येतस्मात्पादप्रक्षालनप्राप्तिः ब्राह्मेणतीर्थेनवक्ष्यमाणलक्षणेन द्विजोनशू
द्रादिः नित्यंसर्वकालं आश्रमांतरगतोप्युपस्पृशेत् आचामेत् कथमंतर्जानुः जानुनोर्मध्येहस्तौकृत्वादक्षिणेनहस्तेनेति १८ तीर्थान्याह कनि
ष्ठातर्जन्याअंगुष्ठस्यमूलानिकरस्याग्रंचप्रजापतिपितृब्रह्मदेवतीर्थानियथाक्रमंवेदितव्यानि १९

वारभयमपः पीत्वासुस्तमङ्गुष्ठमूलेन द्विरुन्मृज्य स्वानि छिद्राणि ऊर्ध्वकायगतानि प्राणादीनि अद्भिरुपस्पृशेत् अद्भिर्द्र्व्यान्तरासंस्पृष्टाभिः पुनरद्भिरि त्यद्भ्रहणमविच्छिन्नमुदकस्पर्शनार्थं पुनश्चाएवविधिनहि प्रकृतिस्थाभिः गन्धरूपरसस्पर्शान्तरमप्राप्ताभिः फेनबुद्बुदरहिताभिः तुशब्दादृष्ट्या रागतानां मृद्यावर्जितानां च निषेधः २० हृत्कण्ठतालुगाभिरद्भिर्यथाक्रमेण द्विजातयः शुध्यन्ति स्त्री च शूद्रश्च अंततः मतेन तालुना स्पृष्टाभिः सकृद् निर्वेश्यादिशेषः चशब्दादनुपनीतोऽपि २१ प्रातः स्नानं यथाशास्त्रमब्दैवतैर्मन्त्रैः आपोहिष्ठेत्येवमादिभिः मार्जनं प्राणसंयमः प्राणायाम वस्यमा

त्रि प्राश्यापो द्विरुन्मृज्य खान्यद्भिः समुपस्पृशेत् अद्भिस्तु प्रकृतिस्थाभिर्हीनाभि फेनबुद्बुदैः २० हृत्कण्ठतालुगाभिस्तु यथासंख्यं द्विजातयः शुध्येरन्स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः २१ स्नानमब्दैवतैर्मन्त्रैर्मार्जनं प्राणसंयमः सूर्यस्य चाप्युपस्थानं गायत्र्याः प्रत्यहं जपः २२ गायत्रीं शिरसा सार्धं जपेद्व्याहृतिपूर्विकाम् प्रतिप्रणवसंयुक्तां त्रिरयं प्राणसंय
मः २३

णलक्षणः ततः सूर्यस्य चाप्युपस्थानं सौरेण मन्त्रेण गायत्र्याश्च सवितुर्वरेण्यमित्यादेः प्रतिदिवसं जपः कार्यः कार्यशब्दाद्यथालि गमस्यैकमभिसंबध्यते २२ गायत्रीं पूर्वोक्ता आपोज्योतिरित्यादिना शिरसा संयुक्ता उक्तव्याहृतिपूर्विकां प्रतिव्याहृतिप्रणवेन संयुक्तां ॐ भूः ॐ भुवः ॐ स्वरिति त्रीनुच्चारान्सुम्ननासिकापुटसंचारिप्राणान्निरुध्य मनसा जपेदित्ययं सर्वः प्राणायामः २३ ५ ५ ५ ५

प्राणायामंपूर्वोक्तंकृत्वातृचेनाब्दैवतेनपूर्वोक्तेनात्मानमद्भिः प्रोक्ष्यसावित्रींजपन्प्रत्यक्संध्यामासीत अर्थात्सत्यस्मुखइतिलभ्यते आतारकोदयात्
तारकोदयावधिप्राक्संध्यांप्रातःसमये एवंपूर्वोक्तविधिमाचरन्प्राङ्मुखःसूर्योदयावधितिष्ठेत् अहोरात्रयोःसंधौयाक्रियाविधीयतेसासंध्या तत्र
अहःसंपूर्णादित्यमंडलदर्शनयोग्यःकालः तद्विपरीतारात्रिः यस्मिन्कालेखंडमंडलस्योपलब्धिःससंधिः २४ २५ ततःसंध्योपासनानंतरंद्वयोःसंध्य

प्राणानायम्यसंप्रोक्ष्यतृचेनाब्दैवतेनतु जपन्नासीतसावित्रींप्रत्यगातारकोदयात् २४ संध्यांप्राक्प्रातरेवंहितिष्ठेदा
सूर्यदर्शनात् अग्निकार्यंततःकुर्यात्संध्ययोरुभयोरपि २५ ततोभिवादयेद्वृद्धानसावहमितिब्रुवन् २६ गुरुंचैवाप्यु
पासीतस्वाध्यायार्थंसमाहितः आहूतश्चाप्यधीयीतलब्धंतस्मैनिवेदयेत् हितंतस्याचरेन्नित्यंमनोवाक्कायकर्मभिः २७

योरग्निकार्यंअग्नौकार्यंसमित्प्रक्षेपादियत्तत्कुर्यात् स्वगृह्योक्तेनविधिना तदनंतरंवृद्धान्गुरुप्रभृतीनभिवादयेत् कथंअसौदेवदत्तशर्माहमितिस्वना
मकीर्तयन् २६ तथागुरुंवक्ष्यमाणलक्षणमुपासीततत्परिचर्यापरस्तदधीनस्तिष्ठेत् स्वाध्यायार्थमध्ययनसिद्धयेसमाहितोऽविक्षिप्तचित्तोभवेत् आहूतश्चाप्य
धीयीतगुर्वाहूतएवाधीयीतनस्वयंगुरुंप्रेरयेत् यच्चलब्धंतत्सर्वंगुरवेनिवेदयेत् तथातस्यगुरोर्हितमाचरेत् नित्यंसदा मनोवाक्कायकर्मभिःनप्रतिकूलंकुर्यात्
अपिशब्दाद्गुरुदर्शनेगौतमोक्तंकंठप्रावरणादिवर्जयेत् २७ छ छ

पूर्वोक्तेनविधिनाभिक्षामाहृत्यगुरवेनिवेद्यतदनुज्ञयाकृताग्निकार्योवाग्यतोमौनी अन्नंसत्कृत्यसंपूज्य अकुत्सयन्ननिंदन् अपोशानक्रियापूर्वंअमृ-
तोपस्तरणमसीत्यादिकंपूर्वंकृत्वाभुंजीत अत्रपुनरग्निकार्यग्रहणंसंध्याकालेकथंचिदकृताग्निकार्यस्यकालांतरविधानार्थंनपुनस्तृतीयभास्यर्थं ३१ ब्र
ह्मचर्येस्थितः एकान्नंनाद्यादनापदिव्याध्याद्यभावे ब्राह्मणःपुनःश्राद्धेभ्यर्थितःसन् काममश्नीयात् व्रतमपीडयन् मधुमांसपरिहारेण अत्रब्राह्मणग्र
णंक्षत्रियादेःश्राद्धभोजनव्युदासार्थं राजन्यवैश्ययोश्चैवनैतत्कर्मप्रचक्षतेइतिस्मरणात् ३२ मधु क्षौद्रंनमद्यं तस्यनित्यंब्राह्मणोमद्यंवर्जयेदितिनि-

कृताग्निकार्योभुंजीतवाग्यतोगुर्वनुज्ञया अपोशनक्रियापूर्वंसत्कृत्यान्नमकुत्सयन् ३१ ब्रह्मचर्येस्थितोनैकमन्नमद्यादनापदि
ब्राह्मणःकाममश्नीयाच्छ्राद्धेव्रतमपीडयन् ३२ मधुमांसांजनोच्छिष्टशुक्तस्त्रीप्राणिहिंसनम् भास्करालोकनाश्लीलपरिवादादिवर्ज
येत् ३३ सगुरुर्यःक्रियाःकृत्वावेदमस्मैप्रयच्छति उपनीयददद्वेदमाचार्यःसउदाहृतः ३४

षेधात् मांसंछागादेरपि अंजनंघृतादिनागात्रस्य
कज्जलादिनाचाक्ष्णोः उच्छिष्टंअगुरोः शुक्तंनिष्ठुरवाक्यंनान्नरसः तस्याभक्ष्यप्रकरणेनिषेधात् स्त्रियमुपभोगे प्राणिहिंसनंजीववधः भास्कर
यावलोकनं अश्लीलमसत्यभाषणं परिवादःसदसद्रूपस्यपरदोषस्याख्यापनं आदिशब्दात्स्मृत्यंतरोक्तंगंधमाल्यादिगृह्यते एतानिब्रह्मचारीवर्जयेत्
३३ योसौगर्भाधानाद्याउपनयनांताःक्रियायथाविधिकृत्वावेदमस्मैब्रह्मचारिणेप्रयच्छतिसगुरुः यःपुनरुपनयनमात्रंकृत्वावेदंददातिसआचार्यः ३४ ७५

३८ आद्यास्त्रयोद्विजाइत्युक्तंतत्रहेतुमाह मातुःसकाशात्प्रथमंजायंतेमौंजीबंधनाद्द्वितीयंजन्मयस्मात्तस्मादेतेब्राह्मणक्षत्रियवैश्याद्विजाउच्यंते ३९
वेदग्रहणाध्ययनफलमाह यज्ञानांश्रौतस्मार्त्तानांतपसांकायसंतापरूपाणांचांद्रायणादीनांशुभानांचकर्मणांउपनयनादिसंस्काराणामवबोधकत्वेन
वेदएवद्विजातीनांपरोनिःश्रेयसकरःमोक्षकरोनान्यः वेदएवेतितन्मूलत्वेनस्मृतेरप्युपलक्षणार्थं ४० ग्रहणाध्ययनफलमुक्त्वेदानींकाम्यब्रह्मयज्ञा

अतऊर्ध्वंपतंत्येतेसर्वधर्मबहिष्कृताः सावित्रीपतिताव्रात्याव्रात्यस्तोमादृतेक्रतोः ३८ मातुर्यदग्रेजायंतेद्वितीयंमौंजिबं
धनात् ब्राह्मणक्षत्रियविशस्तस्मादेतेद्विजाःस्मृताः ३९ यज्ञानांतपसांचैवशुभानांचैवकर्मणाम् वेदएवद्विजातीनांनिः
श्रेयसकरःपरः ४० मधुनापयसाचैवसदेवांस्तर्पयेद्द्विजः पितॄन्मधुघृताभ्यांचऋचोधीतेचयोन्वहम् ४१ यजूंषिशक्ति
तोधीतेयोन्वहंसघृतामृतैः प्रीणातिदेवानाज्येनमधुनाचपितॄंस्तथा ४२ सतुसोमघृतैर्देवांस्तर्पयेद्योन्वहंपठेत् सामानि
तृप्तिंकुर्याच्चपितॄणांमधुसर्पिषा ४३

ध्ययनफलमाह योन्वहंऋचोधीतेसमधुनापयसाचदेवान्पितॄंश्चमधुघृताभ्यांतर्पय
यति यःपुनःशक्तितोन्वहंयजूंष्यधीतेसघृतामृतैर्देवान्पितॄंश्चमधुघृताभ्यांतर्पयति यस्तुसामान्यन्वहमधीतेससोमघृतैर्देवान्पितॄंश्चमधु
सर्पिर्भ्यांप्रीणाति ऋगादिग्रहणंसामान्येनऋगादिमंत्रमात्रार्थम् ४१ ४२ ४३ छ छ छ छ

स्नानानन्तरं कुर्यादित भाव अविप्लुतब्रह्मचर्य अस्खलितब्रह्मचर्यः लक्षण्या बाह्याभ्यन्तरलक्षणैर्युक्ता बाह्यानि तनुलोमकेशदशनादीनि
मनुनोक्तानि आभ्यन्तराणि मशौपिडान्स्वस्त्यायामाश्वलायनोक्तविधिना ज्ञातव्यानि पूर्वस्यारोगो भवत्याकृतिनवस्थानकृ दरणक्षणचतुष्टयसम
शतेभ्योमृत्तिकागृहीतापिडाएककर्तव्य तथानुक्रमेणप्रथमेपिडेस्पृष्टेधान्यवतीभवेत् द्वितीयेस्पृष्टेपशुमतीभवेत् इति
वीते ननु यथि वस्त्रीचतुरासर्वजनमर्दनपराभवति पञ्चमेरोगिणी षष्ठेवन्ध्या सप्तमेव्यभिचारिणी अष्टमेविधवाभवेदित्याश्वलायनस्मरणात् स्त्रि
पनपुंसकत्वनिरत्तयेस्वीलेनपरीक्षिता अनन्यपूर्विकादानेनोपभोगेनचापुरुषान्तरापरिगृहीता कान्ताकमनीयावोढुर्मनोनयनानन्दकारिणी यस्या

अविप्लुतब्रह्मचर्योलक्षण्यांस्त्रियमुद्वहेत् अनन्यपूर्विकांकान्तामसपिण्डांयवीयसीं ५२

मनभ्यरूपोर्निर्वर्ण्यस्याशुद्धिरित्यापस्तम्बस्मरणात् एवमन्यूनाधिकाङ्गादिबाह्यदोषाभावे असपिण्डां समानएक पिंडोदेहोयस्या सासपिण्डा न
सपिण्डा असपिण्डा सापिण्ड्यंच एकशरीरावयवान्वयेनभवति तथाहिपुत्रस्यपितृशरीरावयवान्वयेनपित्रासहसापिण्ड्यम् एवंपितामहादिभिरपि
पितृद्वारेणतच्छरीरावयवान्वयात् एवमातृशरीरावयवान्वयेनमात्रातथामातामहादिभिरपिमातृद्वारेण तथामातृष्वसृमातुलादिभिरपिएकश
रीरावयवान्वयात् तथापितृव्यपितृष्वस्रादिभिरपि तथापत्न्यासहपत्युःएकशरीरारम्भकतया एवंभ्रातृभार्याणामपिपरस्परमेकशरीरारब्धैःसह

शरीरारंभकत्वेन एवं यत्र यत्र सपिंडशब्दस्तत्र तत्र साक्षात्परंपरया वा एकशरीरावयवान्वयो वेदितव्यः यद्येवं मातामहादीनामपि दशाहं शावमाशौ-
चं सपिंडेषु विधीयत इत्यविशेषेण प्राप्नोति स्यादेतत् यदि तत्र सत्तानामितरे कुर्युरित्यादिविशेषवचनं न स्यात् तस्मात्सपिंडेषु यत्र विशेषवचनं ना-
स्ति तत्र दशाहमित्येतद्वचनमवतिष्ठते अवश्यं चैकशरीरावयवान्वयेन सापिंड्यं वर्णनीयं आत्मा हि जज्ञे आत्मन इत्यादिश्रुतेः तथा प्रजामनु प्रजाय-
स्वेति च स एवायं विरूढः प्रत्यक्षेणोपलभ्यत इत्यापस्तंबवचनाच्च तथा गर्भोपनिषदि एतत् षाट्कौशिकं शरीरं त्रीणि पितृतस्त्रीणि मातृतः
अस्थिस्नायुमज्जानः पितृतः त्वङ्मांसरुधिराणि मातृत इति तत्र तत्रावयवान्वयप्रतिपादनात् निर्वाप्यपिंडान्वयेन तु सापिंड्ये मातृसंताने भ्रा-

## अरोगिणीं भ्रातृमतीमसमानार्षगोत्रजाम्

आदिषु च सापिंड्यं न स्यात् समुदायशक्त्यंगीकारेण रूढिपरिग्रहे अवयवशक्तिस्तत्र तत्रावगम्यमाना परित्यक्ता स्यात् परंपरयैकशरीरावयवा-
न्वयेन सापिंड्ये यथा नातिप्रसंगस्तथा वक्ष्यामः यवीयसीं वयसा प्रमाणतश्च न्यूनामुद्वहेत् परिणयेत् स्वगृह्योक्तविधिना ५२ विशेषांतरमप्याह
अरोगिणीं अचिकित्सनीयव्याध्यनुपसृष्टां भ्रातृमतीं पुत्रिकाकरणशंकानिवृत्तये अनेनापरिभाषितापि पुत्रिका भवतीति गम्यते असमानार्ष
गोत्रजां ऋषेरिदमार्षं नाम प्रवर इत्यर्थः गोत्रं वंशपरंपराप्रसिद्धं आर्षं च गोत्रं च आर्षगोत्रे समाने आर्षगोत्रे यस्याः सोऽसमानार्षगोत्रस्तस्माज्जाता-

पिनिर्मथ्यपकजादिशब्दवन्नियतविषयएव तथाचपित्रादयः षट्सपिंडाःपुत्रादयश्च षट् आत्माचसप्तमः संतानभेदेपियतः संतानभेदस्तमादायग
णयेद्यावत्सप्तमइतिसर्वत्रयोजनीयं तथाचमातरमारभ्यतस्तित्पितामहादिगणनायां पंचमपुरुषवर्त्तिनी मातृतः पंचमीत्युपचर्यते एवंपितरमारभ्यत
त्पित्रादिगणनायांसप्तमपुरुषसंतानवर्त्तिनी पितृतः सप्तमीति तथाच भगिन्योर्भगिनीभ्रात्रोर्भ्रातृपुत्रीपितृव्ययोः विवाहेद्यादिभूतत्वाच्छाखाभेदो
वगण्यते यदपिवसिष्ठेनोक्तं पंचमींसप्तमींचैवमातृतः पितृतस्तथेति त्रीनतीत्य मातृतः पंचातीत्यच पितृतइतिच पैठीनसिना तदप्यवाङ्निषेधार्थंनपु
नस्तत्साद्यर्थमितिसर्वस्मृतीनामविरोधः एतच्चसमानजातीयेद्रष्टव्यं विजातीयेतुविशेषः यथाह शंखः यद्येकजाताबहवः पृथक्क्षेत्राः पृथक्जनाः एक

## दशपूरुषविख्याताच्छ्रोत्रियाणांमहाकुलात्

पिंडाः पृथक्शौचाः पिंडस्त्वावर्त्ततेत्रिषु एकस्मात् ब्राह्मणादेर्जाताः एकजाताः पृथक्क्षेत्राः भिन्नजातीयासुस्त्रीषुजाताः पृथक्जनाः समानजातीया
सुभिन्नासुस्त्रीषुजाताः तेएकपिंडाः सपिंडाः किंतुपृथक्शौचाः पृथक्शौचमाशौचप्रकरणेवक्ष्यामः पिंडस्त्वावर्त्ततेत्रिषु त्रिपुरुषमेव सापिंड्यमि
ति ५३ पुरुषाएवपूरुषाः दशभिः पूरुषैः मातृतः पंचभिः पितृतः पंचभिर्विख्यातंयत्कुलं तस्मात् श्रोत्रियाणामधीतवेदानां अध्ययनमुपलक्षणं
श्रुताध्ययनसंपन्नानां महच्चतत्कुलंचमहाकुलं पुत्रपौत्रपशुदासीग्रामादिसमृद्धं तस्मात्कन्या आहर्त्तव्येतिनियम्यते ५४ ५५ ५६

एष सर्वतः प्राप्तौ सत्यामपवादमाह संचारिणो रोगाः कुष्ठापस्मारप्रभृतयः शुक्रशोणितद्वारेणानुप्रविशन्तो दोषाः पुनः हीनक्रियत्वादि पुरुषत्वादयो मनुनोक्ताः एतैः समन्वितात् स्फीतादपि पूर्वोक्तान्महाकुलादपि नाहर्तव्या ५४ एवं कन्याग्रहणे नियममुक्त्वा कन्यादातृवरनियममाह एतैरेव पूर्वोक्तैर्गुणैर्युक्तो दोषैश्च वर्जितो वरो भवति तस्यायमपरो विशेषः सवर्णः उत्कृष्टो वा न हीनवर्णः श्रोत्रियः स्वयं च श्रुताध्ययनसंपन्नः यत्नात्सुयत्नेन पुंस्त्वे परी

स्फीतादपि न संचारिरोगदोषसमन्वितात् ५४ एतैरेव गुणैर्युक्तः सवर्णः श्रोत्रियो वरः यत्नात्परीक्षितः पुंस्त्वे युवा धीमान् जनप्रियः ५५

क्षितः परीक्षोपायश्च नारदेन दर्शितः यस्याप्सु प्लवते बीजं ह्लादि मूत्रं च फेनिलं पुमान्स्याल्लक्षणैरेतैर्विपरीतैस्तु षण्ढकः इति युवा न वृद्धः धीमान् लौकिकवैदिकव्यवहारेषु निपुणमतिः जनप्रियः स्मितपूर्वाभिभाषणादिभिरनुरक्तजनः एवं च प्रथमधर्मार्थत्वेन विवाहस्त्रिविधः तत्र पुत्रार्थो द्विविधः नित्यः काम्यश्च तत्र नित्ये पुत्रार्थे सवर्णा श्रोत्रियो वरश्च अनेन सवर्णा मुख्या दर्शिता ५५

इदानीकाम्येनित्यसंयोगेचानुकल्योवक्तव्य इत्याह यदुच्यते कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशोवराइत्युपक्रम्य ब्राह्मणस्यत्ततस्रो भार्याः क्ष
त्रियस्यतिस्रः वैश्यस्य द्वे इति द्विजातीनां शूद्रावेदनमिति नैतद्याज्ञवल्क्यस्यमत यस्माद्यं द्विजातिस्तत्रस्वयंजायते तज्जायाजाया भवति यदस्याजा
यते पुनरिति स्मृतेः अत्रच तत्रात्माजायतेस्वयमिति हेतुं वदतानैत्यकपुत्रोत्पादनाय काम्यकपुत्रोत्पादनाय वा प्रवृत्तस्य शूद्रापरिणयननिषेधं कुर्वता
नैत्यकपुत्रोत्पादनानुकूल्येकाम्येपुत्रोत्पादने ब्राह्मणस्य क्षत्रियावैश्ये क्षत्रियस्यच वैश्याभ्यनुज्ञाता भवति ५६ इदानी रतिकामस्योत्पन्नपुत्रस्य

यदुच्यते द्विजातीनां शूद्राद्दारोपसंग्रहः नैतन्मममतं यस्मात्तत्रात्माजायतेस्वयम् ५६ तिस्रोवर्णानुपू
र्व्येण द्वे तथैका यथाक्रमम् ब्राह्मणक्षत्रियविशां भार्यास्वाशूद्रजन्मनः ५७

विनष्टभार्यस्याश्रमांतरानधिकारिणो गृहस्थाश्रमावस्थानमात्राभिकांक्षिणः परि
पायनक्रममाह वर्णक्रमेण ब्राह्मणस्य तिस्रः क्षत्रियस्य द्वे वैश्यस्यैका शूद्रस्य तु स्वैव भार्या भवति सवर्णा पुनः सर्वेषां मुख्या स्थितैव पूर्वस्याः पूर्वस्या
अभावेउत्तरोत्तरा भवति अयमेवचक्रमो नैत्यकानुकूल्ये काम्येच पुत्रोत्पादनविधौ अतश्च यच्छूद्रापुत्रस्य पुत्रमध्ये परिगणनं विभागकीर्त्तनंच तथावि
प्रान्मूर्धावसिक्तो ह्युपक्रम्य विन्नास्वेषविधिः स्मृत इति च तद्रतिकामस्याश्रममात्राभिकांक्षिणो वानांतरीयकतयोत्पन्नस्य ५७ ७ ७

दातृक्रममाह एतेषांपित्रादीनांपूर्वपूर्वाभावेपरः परःकन्याप्रदः प्रकृतिस्थश्चेत् यद्युन्मादादिदोषवान्नभवति अतोयस्याधिकारः सोप्रयच्छन्
भ्रूणहत्यामृतावृतावाप्नोति एतच्चोक्तलक्षणवरसंभवेवेदितव्यम् यदापुनर्दातॄणामभावस्तदाकन्यैवगम्यंगमनार्हंसुलक्षणंस्वयमेववरयेत् ६३
६४ सकृदेवकन्याप्रदीयतइतिशास्त्रनियमः अतस्तांदत्वाअपहरन्चोरवद्दंड्यः एवंसर्वत्रप्रतिषेधेप्राप्तेअपवादमाह यदिपूर्वस्माद्वरात्श्रेयान्विद्या

पितापितामहोभ्रातासकुल्योजननीतथा कन्याप्रदःपूर्वनाशेप्रकृतिस्थःपरःपरः ६३ अप्रयच्छन्समाप्नोतिभ्रूणहत्यामृता
वृतौ गम्यंत्वभावेदातॄणांकन्याकुर्यात्स्वयंवरम् ६४ सकृत्प्रदीयतेकन्याहरंस्तांचोरदंडभाक् दत्तामपिहरेत्पूर्वाच्छ्रेयांश्चेद्वरआ
व्रजेत् ६५ अनाख्यायददद्दोषंदंड्यउत्तमसाहसम् अदुष्टांतुत्यजन्दंड्योदूषयंस्तुमृषाशतम् ६६

भिजनाद्यतिशययुक्तोवर आगच्छतिपूर्वस्यचपातकयोगोदुर्वृत्तत्वंवानदादत्तामपिहरेत् एतच्चसप्तमपदात्प्राक्द्रष्टव्यम् ६५ यःपुनस्वकन्यागतं
दोषमनाख्यायकन्यांप्रयच्छति असावुत्तमसाहसंदंड्यः उत्तमसाहसंवक्ष्यते अदुष्टांतुप्रतिगृह्यत्यजन्उत्तमसाहसमेवदंड्यः यःपुनर्विवाहा
दोषादिनाअसद्भिः दोषैर्दीर्घरोगादिभिःकन्यांदूषयतिसपणानांवक्ष्यमाणलक्षणानांशतंदंड्यः ६६ ७ ७ ७ ७

तस्या अल्पप्रायश्चित्तार्थमर्थवादमाह परिणयनात्पूर्वंसोमगंधर्ववन्हय. स्त्रियो भुक्त्वा यथाक्रमं तासां शौचमधुरवचनसर्वमेध्यत्वानि दत्तवंतः तस्मात्स्त्रि
यः सर्वत्रस्पर्शनालिंगनादिषुमेध्याः शुद्धाः स्मृताः ७१ नचतस्यास्तर्हिदोषोनास्तीत्याशंकनीयमित्याह अप्रकाशितान्मनोव्यभिचारात्पुरुषांतरसंभोगसं
कल्पात् यदपुण्यंतस्यऋतौरजोदर्शनेशुद्धिः शूद्रकृते तु गर्भेत्यागः ब्राह्मणक्षत्रियविशां भार्याः शूद्रेण संगताः अप्रजाताविशुध्यंति प्रायश्चित्तेननेतराइतिस्मर
तथा गर्भवधे भर्तृवधे महापातके च ब्रह्महत्यादौ आदिग्रहणाच्छिष्यादिगमने च त्यागः चतस्रस्तु परित्याज्याः शिष्यगा गुरुगा च या पतिघ्नी च विशेषेण जुं

सोमः शौचं ददावासां गंधर्वश्च शुभां गिरम् पावकः सर्वमेध्यत्वं मेध्या वै योषितो ह्यतः ७१ व्यभिचाराहतौ
शुद्धिर्गर्भे त्यागो विधीयते गर्भभर्तृवधादौ च तथा महति पातके ७२ सुरापी व्याधिता धूर्ता वंध्यार्थघ्न्यप्रि
यंवदा स्त्रीप्रसूश्चाधिवेत्तव्या पुरुषद्वेषिणी तथा ७३

गितोपगता च येति व्यासस्मरणात् जुंगितः प्रतिलोमजस्तस्य कर्मका
रादि त्यागश्चोपभोगधर्मकार्ययोः नतु निष्काशनं गृहात्तस्याः निरुंध्यादेकवेश्मनीति नियमात् ७२ द्वितीयपरिणयने हेतूनाह सुरां पिबतीति सु
रापी शूद्रापि पतत्यर्धं शरीरस्य यस्य भार्या सुरां पिबेदिति सामान्येन प्रतिषेधात् व्याधिता दीर्घरोगग्रस्ता धूर्ता विसंवादिनी वंध्या निष्फला अर्थ

वि पीअर्थनाशिनी अप्रियवादिनीपुरुषभाषिणी स्त्रीमस्त्रास्त्रीजननी पुरुषद्वेषिणी सर्वाअहितकारिणी अधिवेत्तव्येतिमत्येकमभिसंबध्यते अ
धिवेदनभार्यांतरपरिग्रहः ७३ स्त्रि साधिविन्नापूर्ववदेववदानमानसत्कारैर्भर्त्तव्या अन्यथाभरणेमहदपुण्यवक्ष्यमाणोदंडश्च नचमरणेसति
: पतःयनदपत्येष्वनुकूल्यवित्तेभ्यतमधर्मार्थकामानामनिदिनमभिवृद्धिः ७४ स्त्रियमत्साह पाभर्तृद्विजोषतिमृतेवायाश्चा

अधिविन्नानुभर्त्तव्यामहदेनोन्यथाभवेत् यत्रानुकूल्यदंपत्योस्त्रिवर्गस्तत्रवर्धते ७४ मृतेजीवतिवा
पत्यौयानान्यमुपगच्छति सेहकीर्तिमवाप्नोतिमोदतेचोमयासह ७५ आज्ञासंपादिनीदक्षांवीरसूंप्रि
यवादिनीम् त्यजन्दाप्यस्तृतीयांशमद्रव्योभरणंस्त्रिया ७६

पत्यादन्यपुरुषंनैवोपगच्छतिसेहलोकेविपुलांकी-
र्तिमवाप्नोति उमयासहक्रीडतिपुण्यप्रभावादमुत्रेति ७७ अधिवेदनकारणाभावे अधिवेत्तारमत्साह आज्ञासंपादिनीमादेशसंपादिनीद
क्षांमकारिणींवाग्मीपुत्रवतीप्रियवादिनीमधुरभाषिणीमन्यजति अधिविदंतिसवताधनस्यतृतीयांशदाप्यः निर्धनस्तुभरणमासाच्छाद
दाप्यः ७६ ७ ७ ७ ७ ७ ७ ७

स्त्रीधर्मानाह स्त्रीभिः सदा भर्तृवचनं कार्यं यस्मादयमेव स्त्रिया उत्कृष्टो धर्मः स्त्रीणां स्वर्गहेतुत्वात् यदा तु महापातकदूषितस्तदा आशुद्धेः संप्रतीक्ष्यः न तत्पारतंत्र्यं उत्तरकालं तु पूर्ववदेव तत्पारतंत्र्यम् ७७ शास्त्रीयदारसंग्रहस्य फलमाह लोके आनंत्यं वंशस्याविच्छेदः दिवः प्राप्तिश्च दारसंग्रहस्य प्रयोजनं कथमित्याह पुत्रपौत्रप्रपौत्रकैः लोकानंत्यमग्निहोत्रादिभिश्च स्वर्गप्राप्तिरित्यन्वयः यस्मात् स्त्रीभ्य एतत् द्वयं भवति तस्मात् स्त्रियः सेव्या उपभोग्याः प्रजार्थं रक्षितव्याश्च धर्मार्थं तथा चापस्तंबेन धर्मप्रजासंपत्तिप्रयोजनं दारसंग्रहस्योक्तं धर्मप्रजासंपन्नेषु दारेषु नान्यां कुर्वीतेति यद्दता रतिफलं तु लौकिकमेव ७८ पुत्रोत्पत्त्यर्थं स्त्रियः सेव्या इत्युक्तं तत्र विशेषमाह स्त्रीणां गर्भधारणयोग्यावस्थोपलक्षितः कालः ऋतुः स च रजोदर्शनदिवसादारभ्य षोडशा-

स्त्रीभिर्भर्तृवचः कार्यमेष धर्मः परः स्त्रियाः आशुद्धेः संप्रतीक्ष्यो हि महापातकदूषितः ७७ लोकानंत्यं दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैः यस्मात्तस्मात्स्त्रियः सेव्याः कर्त्तव्याश्च सुरक्षिताः ७८ षोडशर्तुनिशाः स्त्रीणां तस्मिन् युग्मासु संविशेत् ब्रह्मचार्येव पर्वाण्याद्याश्चतस्रश्च वर्जयेत् ७९

होरात्राणि एतस्मिन् ऋतौ युग्मासु समासु रात्रिषु रात्रिग्रहणाद्दिवसप्रतिषेधः संविशेद्गच्छेत् पुत्रार्थं युग्मास्विति बहुवचनं समुच्चयार्थं अतश्चैकस्मिन्नपि ऋतौ अप्रतिषिद्धासु युग्मासु सर्वासु रात्रिषु गच्छेत् एवं गच्छन् ब्रह्मचार्येव भवति अतो यत्र ब्रह्मचर्यं श्राद्धादौ चोदितं तत्र गच्छतोपि न ब्रह्मचर्यस्खलनदोषोस्ति किंच पर्वाण्याद्याश्चतस्रो वर्जयेत् पर्वाणीति बहुवचनाद्यथार्थावगमादष्टमीचतुर्दश्योर्ग्रह-

याम् यथाक्रमं अमावास्यामष्टमीं च पोर्णमासीं चतुर्दशीम् ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नानकोविदः इति अतो मासस्य दोषिनिर्गो दर्शनादारभ्य चतस्रो रात्रीस्त्यवर्जयेत् ४ किंच एवमुक्तनप्रकारेण स्त्रियमच्छन् क्षामां गच्छेत् क्षामवान् तस्मिन्काले रजस्वलामतेनैव भवति अथ चेन्न भवति तदा कर्तव्या क्षा मना पुत्रोत्पत्त्यर्थं अन्नास्निग्धभोजनादिना पुमान्पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियः इति वचनात् यदा पुमान् पामपि सा चोशोणिताधिक्यं न तदा स्त्र्येव पुरु

एवं गच्छन् स्त्रियं क्षामां मघां मूलं च वर्जयेत्
सुस्थ इन्दौ सकृत्पुत्रं लक्षण्यं जनयेत्पुमान् ८०

षाकृतिः अपुमांसमपि स्त्र्यधिक्ये पुमानेव भवति स्त्र्याकृतिः अलक्ष्यनिमित्तत्वात् शुक्रशोणितयोश्चोपादानकारणत्वेन भवत्यात् तस्मात् क्षामा कर्तव्या मघां मूलं न तदा भे च वर्जयेत् पंडं चैवमदशादि शुभस्थानगते चन्द्रे वस्तु नक्षत्र शुभयोगस्थमादिसपत्नीं सकृदेकस्यां रात्रौ नादिस्त्रिर्वा ततो लक्षणैर्युक्तं पुत्रं जनयति पुमान् मतिहृतपुरस्त्रा ८०

एवमृतौ नियममुक्त्वाइदानीमनृतौ नियममाह भार्यायाइच्छानतिक्रमेणप्रवृत्तिरस्याक्तौनियथाकामी भवेत् वाशब्दोनियमांतरपरिग्रहार्थः नपु र्वनियमनिवृत्त्यर्थः स्त्रीणांवरमिंद्रदत्तमनुस्मरन् भवतीनांकामविहंतापातकीस्यादिति यथाता अब्रुवन्नुवरंवृणामहे ऋत्वियात्प्रजांविंदामहे काममा विजनिनोः संभवामेति तस्माद्दत्वियात्स्त्रियःप्रजांविंदंतेकाममाविजनिनोःसंभवंतिवरंवृतंतासामिति अपिच स्वदारेष्वेवनिरतः नितरांतन्मनस्कोभ वेदित्यनुषज्जते एवकारेणस्त्र्यंतरगमनंनिवर्त्तयति प्रायश्चित्तस्मरणात् उभयत्रापिदृष्टप्रयोजनमाह स्त्रियोरक्षायतःस्मृताइति यस्मात्स्त्रियोरक्षाः

यथाकामी भवेद्वापिस्त्रीणांवरमनुस्मरन् स्वदारनिरतश्चैवस्त्रियोरक्षायतःस्मृताः ८१

स्मृताउक्ताः कर्त्तव्याश्चसुरक्षिताइति नचसुरक्षितत्वंयथाकामित्वेनस्त्र्यंतरागमनेनभवतीति अत्राह तस्मिन्युग्मासुसंविशेदिति किमयंविधि र्नियमःपरिसंख्यावा उच्यते नतावद्विधिःप्राप्तार्थत्वात् नापिपरिसंख्यादोषत्रयसमासक्तेः अतोनियमंप्रतिपेदिरेन्यायविदः कःपुनरेषांभेदः अत्यंता प्राप्तप्रापणंविधिः यथाग्निहोत्रंजुहुयादष्टकाःकर्त्तव्याइति पक्षेप्राप्तस्याप्राप्तपक्षांतरप्रापणंनियमः यथासमेयजेतेति दर्शपूर्णमासाभ्यांयजेतेतिया गः कर्त्तव्यतयाविहितः सचदेशमंतरेणकर्त्तुमशक्यइत्यर्थाद्देशःप्राप्तः सचसमोविषमश्चेतिद्विविधः यदायजमानःसमेयियक्ष्यतेतदासमेयजेतेतिनच

पंक्तिः ओ० ३ विधिरत्यंतमप्राप्तौनियमःपाक्षिकेविधिः तत्रचान्यत्रचप्राप्तौपरिसंख्येतिगद्यते

विरोधः अनुवादाभावाद्विध्यर्थत्वाच्च वचनस्य तत्र हि विध्यनुवादविरोधः यत्र विधेयावधितया तदेवानुवदितव्यम् प्राप्ततयान्योद्देशेन विधातव्यं च यथा
वाजपेयाधिकरणपूर्वपक्षे वाजपेयेन स्वाराज्यकामो यजेतेति वाजपेयलक्षणगुणविधानावधित्वेन यागोऽनुवदितव्यः स एव स्वाराज्यलक्षणफलोद्देशे
न विधातव्यश्चेति न चानुवादेनेह कृत्यमस्ति यत्तु नियमे दृष्टकल्पनमित्युक्तं तत्परिसंख्यायामपि समानं अनृतौ गच्छतो दोषकल्पनात् यत्तु नैयमिक
पुत्रोत्पादनविध्याक्षेपेणैव ऋतौ नित्यगमनप्राप्तेर्न नियम इति तदसत् स एवायं नैयमिकपुत्रोत्पादनविधिः स्यात् मतमेवं गच्छन् स्त्रियं क्षामालक्षण्यं
पुत्रं जनयेदिति स्त्र्यभिगमनातिरिक्तः पुत्रोत्पादनविधिरिति तन्न गमनकरणिकाया भावनाया एव पुत्रोत्पत्तिकर्मता प्रदृश्यते एवं गच्छन् लक्षण्यं पुत्रं
जनयेदित्यनेन यथाग्निहोत्रं जुह्वन् स्वर्गं भावयेदिति न चासंनिहितादेरशक्यार्थविधिप्रसंगः संनिहितशक्त्योरेवोपदेशात् ऋतुस्नातां तु यो भार्यां सं
निधौ नोपगच्छतीति यः स्वदारान् ऋतुस्नातान् स्वस्थः सन्नोपगच्छतीति च विशेषोपादानात् अनिच्छानिवृत्तिस्तु नियमविधानादेव न च विशेषणपरता-
पि पक्षे भावार्थविधिसंभवात् नापि गृह्यस्मृतिविरोधः संवत्सरात् पूर्वमेव ऋतुदर्शने संविशतो न ब्रह्मचर्यस्खलनदोषः यथा श्राद्धादिषु तस्मात्स्वार्थहा
निपरार्थकल्पनाप्राप्तबाधलक्षणदोषत्रयवती परिसंख्या न युक्ता पंच पंचनखा भक्ष्या इत्यत्र यद्यपि शशादिषु भक्षणस्य पक्षे प्राप्तेर्नियमः शशादि-
षु श्वादिषु च प्राप्तेः परिसंख्येत्युभयसंभवः तथापि नियमपक्षे शशाद्यभक्षणे दोषप्रसंगः श्वादिभक्षणे चादोषप्रसंगेन प्रायश्चित्तस्मृतिविरोध इति प-
रिसंख्यैवाश्रिता एतेन सायंप्रातर्द्विजातीनामशनस्मृतिनोदितमित्यत्रापि नियमो व्याख्यातः नांतरा भोजनं कुर्यादिति च पुनरुक्तं स्यात् परिसंख्यायामेवं
च नियमे सति ऋतावृतावितिवीप्सा लभ्यते निमित्तावृत्तौ नैमित्तिकमप्यावर्त्तत इति न्यायात् यथाकामी भवेदित्यपि नियम एव अनृतावपि स्त्रीकामना

नमुदाक्तेस्त्वार्थस्यश्चसत्वात् यदातु विषमदेशोपिपश्यतेतदासमेपनेनेतिस्वार्थविधत्ते स्वार्थस्यतदानीममसत्वात् विषमदेशाभिघातिस्तार्थश्री
चोदितदेशेनैवयागनिष्पत्तेः अचोदितदेशोपादानेनयथाशास्त्रयागोनानुष्ठितःस्यादिति तथाअश्रुस्रोन्ताभिमुखोतेति इदमपिस्मार्त्तमुदाहरणं
येणाध्यास्यात एकस्यानेकभार्यासंस्थान्यतोनिस्वार्थपैरूपमुनर्वचनपरिसंख्या तद्यथा इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते इत्ययमभ
ससामर्थ्यादश्वाभिधान्यागर्दभाभिधान्याश्चरशनायाग्रहणेविनिर्मुक्तः पुनरश्वाभिधानीमादत्त इत्यनेनाश्वाभिधान्यानियुज्यमानोगर्दभाभिधान्या

ग तथापञ्चपंचनखाभक्ष्याइत्सनाहिपदृच्छया श्वादिषुशशादिषुचभक्षणप्राप्ते पुनः शशादिषुभूयमाणश्वादिभ्योनिवर्त्तत इति किंपुनरभ्यु-
पगिसंख्येत्याह न्याहि कृतदारसंग्रहस्यस्वेच्छयैवतौगमनमाताभिभिनविधेरयविषयः नापिनियमस्य गृहस्थभिभिरोधात् यथाहिस्मरतिगृ-
हकारा दारसंग्रहानन्तरंविरामदादशाभसंवत्सरवाभब्रह्मचारीस्यादिति नमदादशवार्षसंवत्सराद्वापूर्वमेवऋतुसमयेऋतौगच्छेदेवेतिनियमा-
दृष्टचर्यस्मरणबाध्येत अपिचमाभेभार्यावचनविशेषणपरमुक्तं मर्षंचतौ भार्यागमनमिच्छयैवसनोपदिगच्छेदिताये धेमिपचनु व्यभिर्धुक्तः किंच
नैयमिकस्तुचोतसमिविधेरेव ऋतौगमननिस्यमासमेवेति ऋतौगच्छेदेवेतिनियमोनर्थकःस्याव् नियमेचाद्दष्टकल्पनीय किंच स्त्रीगतव्यमेवेतिनिय
ःस्याव् विध्यनुवादविरोधश्चनियमे तथाचोक्तःशब्दः सङ्कदुवरितस्तमेवार्थं

अनुवदतिपक्षेविधत्तेचेति तस्माहतावेचगच्छेन्नान्यथातिपरिसंख्यैषमुक्ता तदिदंमासविविषरूपादयोनानुमन्यते यतोनियमएवमुक्तः
र्थनिधिसंभवात् भगमनेदोषश्रवणाच्च ऋतुस्नातांतुयोभार्यांसन्निधौनोपगच्छति घोरायांभ्रूणहत्यायांयुज्यतेनात्रसंशय इति नन्वविध्यनुवाद

किंच पाणिग्रहणात्प्राक् पिता कन्यामकार्यकरणाद्रक्षेत् ततऊर्ध्वंभर्त्ता तदभावेपुत्राः स्थाभावेचतेषांसुक्तानामभावेज्ञातयः ज्ञातीनामभावेराजा प
क्षहूयावसानेतुराजाभर्त्ताप्रभुःस्त्रियाइतिवचनात् अतःक्वचिदपिस्त्रीणांनैवस्वातंत्र्यम् ८५ किंच भर्त्राविनाभर्त्तृरहिता पित्रादिरहितानस्यात् य
स्मात्तद्रहिता गर्हणीयानिंद्याभवेत् एतच्चब्रह्मचर्यपक्षे भर्त्तरिमृतेब्रह्मचर्यंतदन्वारोहणंवेति विष्णुस्मरणात् अन्वारोहणेमहाभ्युदयः तथाचव्या
सः कपोतिकाख्यानव्याजेनदर्शितवान् पतिव्रतासुसंदीप्तंप्रविवेशहुताशनं तत्रचित्रांगदधरंभर्त्तारंसान्वपद्यत ततःस्वर्गगतःपक्षीभार्ययासहसं-

रक्षेत्कन्यांपिताविन्नांपतिःपुत्रास्तुवार्धके अभावेज्ञातयस्तेषांनस्वातंत्र्यंक्वचित्स्त्रियाः ८५
पितृमातृसुतभ्रातृश्वश्रूश्वसुरमातुलैः हीनानस्याद्विनाभर्त्रागर्हणीयान्यथाभवेत् ८६

गतः कर्मणापूजितस्तत्ररेमेचसहभार्ययेति तथाचशंखांगिरसौ तिस्रःकोट्योर्धकोटीचयानिलोमानिमानुषे तावत्कालंवसेत्स्वर्गेभर्त्तारंयानु
गच्छतीतिप्रतिपाद्यतयोरवियोगंदर्शयतः व्यालग्राहीयथासर्पंबलादुद्धरतेबिलात् तद्वदुद्धृत्यसानारीसहतेनैवमोदते तत्रसाभर्त्तृपरमास्तू-
यमानाप्सरोगणैः क्रीडतेपतिनासार्द्धंयावदिंद्राश्चतुर्दशेति तथा ब्रह्मघ्नोवाथमित्रघ्नःकृतघ्नोवाभवेत्पतिः पुनात्यविधवानारीतमादायमृतातु-
या तथाहारीतः मृतेभर्त्तरियानारीसमारोहेद्धुताशनम् सारुंधतीसमाचारास्वर्गलोकेमहीयते यावच्चाग्नौमृतेपत्यौस्त्रीनात्मानंप्रदाहयेत् तावन्न

नस्यस्थेनवैषम्यं यत्तु तस्मादु हन्पुरायुषः स्वः कामी प्रेयादिति श्रुतिविरोधादनुगमनमयुक्तमिति तच्चन स्वः काम्यायुषः प्राक् न प्रेयादिति स्वर्गफलो हि
शेनायुषः प्रागायुर्व्ययोन कर्त्तव्यो मोक्षार्थिना यस्मादायुषः शेषे सति नित्यनैमित्तिककर्मानुष्ठानक्षपितांतःकरणकलंकस्य श्रवणमनननिदिध्यासनसं
पत्तौ सत्यामात्मज्ञानेन नित्यनिरतिशयानंदब्रह्मप्राप्तिलक्षणमोक्षसंभवः तस्मादनित्याल्पसुखस्वरूपस्वर्गार्थमायुषो व्ययो न कर्त्तव्य इत्यर्थः अतश्च मोक्ष
मनिच्छंत्या अनित्याल्पसुखस्वरूपस्वर्गार्थिन्या अनुगमनं युक्तं इतरकाम्यानुष्ठानवदिति सर्वमनवद्यं ८६ किंच प्रियमनवद्यत्वेन मनोनुकूलमायत्यां
चयच्छ्रेयस्करं तद्धितं प्रियं च हितं च प्रियहितं पत्युः प्रियहिते तस्मिन् युक्ता निरता स्वाचारा शोभनः आचारो यस्याः सा तथोक्ता शोभनश्चाचारो दर्शितः–

पतिप्रियहिते युक्ता स्वाचारा विजितेंद्रिया सेह कीर्त्तिमवाप्नोति प्रेत्य चानुत्तमां गतिम् ८७

शंखेन नानुक्ता गृहान्निर्गच्छेत्
नानुत्तरीयानलक्षितं व्रजेत् न परपुरुषं भाषेतान्यत्र वणिक्प्रव्रजितवृद्धवैद्यप्रेष्यैः न नाभिं दर्शयेत् आगुल्फाद्वासः परिदध्यात् न स्तनौ विवृतौ कुर्यात् न
हसेदप्रावृता भर्तारं तद्बंधून्वा न द्विष्यात् न गणिकाधूर्ताभिसारिणीप्रव्रजिताप्रेक्षणिकामायामूलकुहककारिकादुःशीलादिभिः सहैकत्र तिष्ठेत् सं
सर्गेण हि चारित्रं दुष्यतीति विजितेंद्रिया विजितानि संयमितानींद्रियाणि श्रोत्रादीनि वागादीनि च मनःसहितानि यया सा इह लोके कीर्त्तिं प्रख्यातिं पर
लोके चोत्तमां गतिमाप्नोति अयं च सकल एव स्त्रीधर्मो विवाहादूर्ध्वं वेदितव्यः प्रागुपनयनात् कामचारकामवादकामभक्षा इति स्मरणात् वैवाहिको विधिः स्त्री
णामौपनायनिकः स्मृत इति ८७ छ छ

ब्राह्मणस्यचतस्रोभार्याभवतिक्षत्रियस्यतिस्रोवैश्यस्यद्वेशूद्रस्यैकेत्युक्तातासुचपुत्राउत्पादयितव्याइत्युक्तं इदानींकस्यांकस्मात् कःपुत्रोभवति इतिविवेकमाह सवर्णेभ्योब्राह्मणादिभ्यः सवर्णासुब्राह्मण्यादिषुसजातयोमातृपितृसमानजातीयाःपुत्राभवंति विन्नास्वेषविधिःस्मृतइतिसर्व शेषत्वेनोपसंहरणात् विन्नास्वसवर्णास्वितिसंबध्यते विन्नाशब्दस्यसंबंधिशब्दत्वाद्वेत्तृभ्यःसवर्णेभ्यइतिलभ्यते एकःसवर्णशब्दःस्पष्टार्थः अतश्चायमर्थःसंपन्नः उक्तेनविधिनाऊढायांसवर्णायांवोढुःसमानादुत्पन्नःसमानजातीयोभवति अतश्चकुंडगोलककानीनसहोढादीनामस वर्णत्वमुक्तंभवति तेचसवर्णेभ्योनुलोमप्रतिलोमेभ्यश्चभिद्यमानाःसाधारणधर्मैरहिंसादिभिरधिक्रियंते शूद्राणांतुसधर्माणःसर्वेपध्वंसजाः

सवर्णेभ्यःसवर्णासुजायंतेहिसजातयः अनिंद्येषुविवाहेषुपुत्राःसंतानवर्धनाः ९०

स्मृताइतिस्मरणात् अपध्वंसजाःव्यभिचारजाताः शूद्रधर्मैरपिद्विजशुश्रूषादिभिरधिक्रियंते ननुकुंडगोलकयोरब्राह्मणत्वेश्राद्धेप्रतिषेधोनुप पन्नःन्यायविरोधश्च योयज्जातीयात् यज्जातीयायामुत्पन्नःसतज्जातीयएव यथागोर्गविगौः अश्वादृडवायामश्वः तस्माद्ब्राह्मणाद्ब्राह्मण्यामुत्प न्नोनब्राह्मणइतिविरुद्धं तथाकानीनपौनर्भवादीननुक्रम्य सजातीयेष्वयंप्रोक्तस्तनयेषुमयाविधिरितिवचनविरोधश्च नैतत्सारं ब्राह्मणेनब्रा ह्मण्यामुत्पन्नोब्राह्मणइति भ्रमनिवृत्त्यर्थः श्राद्धेप्रतिषेधः यथात्यंतमप्राप्तस्यपतितस्यश्राद्धेप्रतिषेधः नचन्यायविरोधः यत्रप्रत्यक्षगम्याजातिर्भ

अनेकभार्यस्याह सवर्णायासत्या अन्यासमवर्णा नैवधर्मकार्यं कारयेत् सवर्णास्वपिबहीषु धर्म्ये विधौ धर्मानुष्ठाने ज्येष्ठया विनाऽन्ययाश्युक्त्य
इतराभ्यमाकभिशावाननियोक्तव्या ८८ प्रमीतपतिकाया विधिमुक्त्वादानीं प्रमीतभार्यस्याह पूर्वोक्ता वृत्तवती आचारवती विपन्नास्त्रिय
मग्निहोत्रेण श्रौतनाग्निनानदस्मार्तेनदाहयित्वापतिः भर्त्ता श्रुत्यादिरथ्रौनिश्चयज्ञोवा आश्रमान्तरे पनधिकृतो धान्यतराभावेपुनर्दारान्

सत्यामन्यासवर्णायाधर्मकार्यं न कारयेत् सवर्णासु विधौ धर्म्ये ज्येष्ठया न विनेतरा ८८
दाहयित्वाग्निहोत्रेण स्त्रियं वृत्तवतीं पतिः आहरेद्विधिवद्दारानग्नींश्चैवाविलम्बयन् ८९

अग्नीन्श्चविधिवदाहरेत् अविलम्बयन् शीघ्रमेव अनाश्रमी न तिष्ठेतदिनमेकमपिद्विजइतिदक्षस्मरणात् पत्न्याधानेन सहाधिकृतायाएवनान्यस्या
पत्तुद्वितीयापत्नेश्योभार्यादहे द्वैतानिकाग्निभिः मीनत्तामप्रथमाधातुकापानप्रमादितादीनि तथा मृतायाश्तु द्वितीयायायोग्निहोत्रसमुत्सृजेत् मद्यमर्त्तविजा
नीयाग्रुप्मकामान्तसमुत्स्रजेदिति एवमादि तदाधानेनसहानधिकृतायाभमिदाहयेदितष्य इतिविवाहप्रकरणम् ८९ ५ ७ ७

कृताकृताद्युपहारद्रव्यजातं विनायकस्योपाहृत्य संनिधानात्तज्जनन्याश्च शिरसा भूमिं गत्वा तत्पुरुषाय विद्महे वक्रतुंडाय धीमहि तन्नो दंती प्रचोदया-
दित्यनेन मंत्रेण विनायकं सुभगायै विद्महे काममालिन्यै धीमहि तन्नो गौरी प्रचोदयादित्यनेनांबिकां च नमस्कुर्यात् तत उपहारशेषमास्तीर्णकुशेषु शू-
र्पे निधाय चतुष्पथे निदध्यात् बलिं गृह्णं त्विमे देवा आदित्या वसवस्तथा मरुतश्चाश्विनौ रुद्राः सुपर्णाः पन्नगा ग्रहाः असुरा यातुधानाश्च पिशाचोरगमा-
तरः शाकिन्यो यक्षवेताला योगिन्यः पूतनाः शिवाः जृंभकाः सिद्धगंधर्वा माया विद्याधरा नराः दिक्पाला लोकपालाश्च ये च विघ्नविनायकाः जगतां शां-
तिकर्त्तारो ब्रह्माद्याश्च महर्षयः मा विघ्नं मा च मे पापं मा संतु परिपंथिनः सौम्या भवंतु तृप्ताश्च भूतप्रेताः सुखावहाः इत्येतैर्मंत्रैः कृताकृताः सक्तवो हृता
स्तंडुलाः पललं तिलपिष्टं तन्मिश्र ओदनः पललौदनः मत्स्याः पक्वा अपक्वाश्च मांसमेतावदेव च पक्वमपक्वं च पुष्पं चित्रं रक्तपीतादिनानावर्णं चं-
दनादि सुगंधद्रव्यं सुरा त्रिविधा गौडी माध्वी पैष्टी च मूलकं मूलककंदाकारो भक्ष्यविशेषः पूरिका प्रसिद्धा अपूपः स्नेहपक्वो गोधूमविकारः उंडेर-
कस्रजः उंडेरकाः पिष्टादिमय्यः ताः प्रोताः स्रजः दध्यन्नं दधिमिश्रमन्नं पायसं गुडपिष्टं गुडमिश्रं शाल्यादिपिष्टं मोदकाः लड्डुकाः अनंतरं विनायकं
तज्जननीमंबामंबिकां वक्ष्यमाणमंत्रेणोपतिष्ठेत् किं कृत्वेत्याह सकुसुमोदकेनार्घ्यं दत्वा दूर्वासर्षपपुष्पाणां पूर्णमंजलिं दत्वोपतिष्ठेदिति गतेना-
न्वयः २०४ २०५ २०६ २०७ २०८ २०९ उपस्थानमंत्रमाह विनायकोपस्थाने भगवन्नित्यूहः ततोऽभिषेकानंतरं यजमा-
नः शुक्लांबरधरः शुक्लमाल्यानुलेपनो ब्राह्मणान् भोजयेत् यथाशक्ति गुरवे सुताध्ययनवृत्तसंपन्नाय विनायकस्नपनविधिज्ञाय वस्त्रयुग्मं दद्यात्
अपिशब्दाद्यथाशक्ति दक्षिणां विनायकोद्देशेन ब्राह्मणेभ्यश्च तत्रायं प्रयोगक्रमः चतुर्भिर्ब्राह्मणैः सार्धं शुक्ललक्षणो गुरुर्मंत्रज्ञो भद्रासनरचनानं-

अन्ते नमस्करेण कृताभिषेकस्य मूर्धनि सव्यपाणिगृहीतकुशान्तर्हिते सार्षपतैलं औदुंबरस्रुवेण होमयेत् स्वाहाकारान्तैर्मन्त्रैर्जुहुयादाचार्यः २८२ मित
संमितादिभिर्विनायकस्य नामभिः स्वाहाकारान्तैः प्रणवादिभिर्जुहुयादित्यनेनसंबन्धः स्वाहाकारयोगाच्चतुर्थी विभक्तिः अतश्च ओंमितायस्वाहा
ओंसंमितायस्वाहा ओंशालायस्वाहा ओंकटंकटायस्वाहा ओंकूष्माण्डायस्वाहा ओंराजपुत्रायस्वाहेति षड्मन्त्रा भवन्ति अनन्तरं लौकिकेऽग्नौ स्था

स्नातस्यसार्षपतैलंस्रुवेणौदुंबरेणतु जुहुयान्मूर्धनिकुशान्सव्येनपरिगृह्यतु २८३ मितश्चसंमितश्चैव
तथाशालकटंकटौ कूष्माण्डोराजपुत्रश्चेत्यन्तेस्वाहासमन्वितैः २८४ नामभिर्बलिमन्त्रैश्चनमस्कारसमन्वितैः
दद्याच्चतुष्पथेशूर्पेकुशानास्तीर्यसर्वतः २८५ कृताकृतांस्तण्डुलांश्चपललौदनमेवच मत्स्यान्पक्वांस्तथैवामा
न्मांसमेतावदेवतु २८६ पुष्पंचित्रंसुगन्धंचसुरांचत्रिविधामपि मूलकपूरिकापूपांस्तथैवोण्डेरकस्रजः २८७ दध्य
न्नंपायसंचैवगुडपिष्टंसमोदकम् एतान्सर्वान्समाहृत्यभूमौकृत्वाततःशिरः २८८ विनायकस्यजननीमुपतिष्ठे
त्ततोम्बिकाम् दूर्वासर्षपपुष्पाणांदत्वार्घ्यंपूर्णमञ्जलिम् २८९

लीपाकविधिनान्नरूपपायसान्नापदैरेव षड्भिर्मन्त्रैस्तस्मिन्नेवाग्नौ हुत्वान
शेषमग्नौ इन्द्राग्नियमनिर्ऋतिवरुणवायुसोमेशानब्रह्मानन्तानां नामभिश्चतुर्थ्यन्तैर्नमोन्वितैस्तेभ्यो बलिं दद्यात् अनन्तरं किं कुर्यादित्याह

कृताकृताद्युपहारद्रव्यजातंविनायकस्योपाहृत्यसंनिधानात्तज्जनन्याश्च शिरसाभूमिंगत्वा तत्पुरुषायविघ्नहेवक्रतुंडायधीमहि तन्नोदंतीप्रचोदया
दित्यनेनमंत्रेण विनायक सुभगायैविद्महेकाममालिन्यैधीमहि तन्नोगौरीप्रचोदयादित्यनेनांबिकांच नमस्कुर्यात् ततउपहारशेषमास्तीर्णकुशेषू-
र्पेनिधायचतुष्पथेनिदध्यात् बलिंगृण्हंत्विमेदेवा आदित्यावसवस्तथा मरुतश्चाश्विनौरुद्राः सुपर्णः पन्नगाग्रहाः असुरायातुधानाश्चपिशाचोरगमा
तरः शाकिन्योयक्षवेतालायोगिन्यः पूतनाःशिवाः जृंभकाःसिद्धगंधर्वामायाविद्याधरानराः दिक्पालालोकपालाश्चयेचविघ्नविनायकाः जगतांशां
तिकर्त्तारोब्रह्माद्याश्चमहर्षयः माविघ्नमाचमेपापंमासंतुपरिपंथिनः सौम्याभवंतुतृप्ताश्चभूतप्रेताःसुखावहाः इत्येतैर्मंत्रैः कृताकृताः सकृद्वहृता
स्तंडुलाः पललंतिलपिष्टंतन्मिश्रओदनः पललौदनः मत्स्याःपक्वाअपक्वाश्चमांसमेतावदेवच पक्वमपक्वंच पुष्पंचित्रंरक्तपीतादिनानावर्णं चं
दनादिसुगंधद्रव्यं सुरात्रिविधा गौडीमाध्वीपैष्टीच मूलकंमूलककंदाकारोभक्ष्यविशेषः पूरिकाप्रसिद्धा अपूपःस्नेहपक्वोगोधूमविकारःउंडेर
करस्रजः उंडेरकाःपिष्टादिमय्यः ताःप्रोताःस्रजः दध्यन्नंदधिमिश्रमन्नं पायसं गुडपिष्टंगुडमिश्रंशाल्यादिपिष्टं मोदकालड्डुकाः अनंतरंविनायकं
तज्जननीमंबामंबिकांवक्ष्यमाणमंत्रेणोपतिष्ठेत् किंकृत्वेत्याह सकुसुमोदकेनार्घ्यंदत्वादूर्वासर्षपपुष्पाणांपूर्णमंजलिंदत्वोपतिष्ठेदितिगतेना
न्वयः २०४ २०५ २०६ २०७ २०८ २०९ उपस्थानमंत्रमाह विनायकोपस्थानेभगवन्निस्पृहः ततोभिषेकानंतरंयजमा
नः शुक्लांबरधरः शुक्लमाल्यानुलेपनोब्राह्मणान्भोजयेत् यथाशक्तिगुरवेश्रुताध्ययनवृत्तसंपन्नायविनायकस्नपनविधिज्ञायवस्त्रयुग्मंदद्यात्
अपिशब्दाद्यथाशक्तिदक्षिणांविनायकोद्देशेनब्राह्मणेभ्यश्च तत्रायंप्रयोगक्रमः चतुर्भिर्ब्राह्मणैःसार्धंसुकुलक्षणोगुरुर्मंत्रज्ञोभद्रासनरचनानं-

तरनस्तानिर्मौविनायकतज्जननीचोक्तमन्त्राभ्यां गन्धपुष्पादिभिः समभ्यर्च्य चरुभपविलाभद्रासनोपविष्टस्य यजमानस्य पुण्याहवाचनं कृत्वा चतुर्भि
कलशैरभिषिच्य सार्षपतैलं शिरसि हुत्वा चरु होमं विधायाभिषेकशालायाश्चतुर्दिक्षु इन्द्रादिलोकपालेभ्यो बलिं दद्यात् यजमानस्तु स्नानानन्तरं सु
क्लमाल्याम्बरधरो गुरुणा सहितो विनायकमम्बिकां चोपहारं दत्वा शिरसा भूमिं गत्वा कुङ्कुमोदकेनार्घ्यं दत्वा दूर्वासर्षपपुष्पाञ्जलिं दत्वा विनायकमभि

रूपं देहि यशो देहि भगं भगवति देहि मे पुत्रान्देहि धनं देहि सर्वकामांश्च देहि मे २९० ततः शुक्लाम्बरधरः
शुक्लमाल्यानुलेपनः ब्राह्मणान्भोजयेद्दद्याद्वस्त्रयुग्मं गुरोरपि २९१ एवं विनायकं पूज्य ग्रहांश्चैव विधा
नतः कर्मणां फलमाप्नोति श्रियं चाप्नोत्यनुत्तमाम् २९२

कात्यायनीं चैवं गुरुरपरशेषं पूर्वं कृत्वा शिरसा भूमिं गत्वाम्बिकां
दद्यात् अनन्तरं वस्त्रयुग्मं दक्षिणां ब्राह्मणभोजनं च दद्यादिति इति विनायकस्नपनविधिः २९० २९१ अस्यैव विनायकस्नपनस्योक्तोपसंहारेण
संयोगान्तरं दर्शयितुमाह एवमुक्तेन प्रकारेण विनायकं सम्पूज्य कर्मणां फलमविघ्नेनाप्नोतीत्युक्तोपसंहारः संयोगान्तरमाह श्रियं चोत्कृष्टतमामाप्नोती
ति श्रीकामस्यानेनैव विधानेन विनायकं पूजयेदित्यर्थः आदित्यादिग्रहपीडाशान्तिकामस्य लक्ष्म्यादिकामस्य च ग्रहपूजादिकं न्यायधानन्तरं पद्मपूजासु

पक्षिपति ग्रहांश्चैव विधानतइति ग्रहानादित्यादीन्वक्ष्यमाणेनविधिनासंपूज्य कर्मणां सिद्धिमाप्नोतिश्रियंचाप्नोति २९२ नित्यकाम्यसंयोगानाह
आदित्यस्यभगवत. सदाप्रतिदिवसंरक्तचंदनकुंकुमकुसुमादिभिः पूजांकुर्वन्स्कंदस्यमहागणपतेश्चनित्यं पूजांकुर्वन् सिद्धिंमोक्षमात्मज्ञानद्वारेण
प्राप्नोतीतिनित्यसंयोगः आदित्यस्कंदमहागणपतीनामन्यतमस्यसर्वेषांवातिलकंस्वर्णादिनिर्मितंरूप्यनिर्मितंवाकुर्वन् सिद्धिमभिलषितामाप्नोति त
थाचक्षुषीचेतिकाम्यसंयोगः इतिमहागणपतिकल्पः २९२ ग्रहांश्चैवविधानतः कर्मणांफलमाप्नोतिश्रियंचाप्नोत्यनुत्तमामित्यनेनग्रहपूजायाः कर्मणा

आदित्यस्यसदापूजांतिलकंस्वामिनस्तथा महागणपतेश्चैवकुर्वन्सिद्धिमवाप्नुयात् २९३ श्रीकामः
शांतिकामोवाग्रहयज्ञंसमाचरेत् वृष्ट्यायुःपुष्टिकामोवातथैवाभिचरन्नपि २९४ सूर्यःसोमोमहीपुत्रः
सोमपुत्रोबृहस्पतिः शुक्रःशनैश्चरोराहुः केतुश्चेतिग्रहाःस्मृताः २९५

मविघ्नेनफलसिद्धिः श्रीश्चफलमित्युक्तमिदानींफलांतराण्याह श्रीकामइतिपूर्वोक्तस्यानुवाद. शांतिकामआपदुपशांतिकामः सस्यादिरक्षार्थंप्रवर्ष
णंवृष्टिः आयुरपमृत्युजयेनदीर्घकालजीवनं पुष्टिरनवद्यशरीरत्वं एताःकामयतइतिवृष्ट्यायुःपुष्टिकामः एतेश्रीकामादयोग्रहयज्ञंग्रहपूजांसमाच
रेयुः तथाभिचरन्नपि अदृष्टोपायेनपरपीडाअभिचारः तत्कामश्चग्रहयज्ञंसमाचरेत् २९४ ग्रहानाह एतेसूर्यादयोनवग्रहाः २९५ ॥ ॥

नशानिंविद्यादाहुंपश्चिमदक्षिणे पश्चिमोत्तरतः केतुं स्थाप्यावैशक्रतंडुलेश्विति पूजाविधिमाह यथावर्णयस्यग्रहस्ययोवर्णः तद्वर्णानिवस्त्रगंध
पुष्पाणिदेयानि मलयश्च धूपश्चसर्वेभ्योगुग्गुलुर्देयः चरवश्चप्रतिदैवतं अग्निप्रतिष्ठापनान्याधानादिपूर्वकंचतुरश्चतुरोमुष्टीन्निर्वपस्यमुष्मैत्वाजु
ष्टंनिर्वपामीत्यादिविधिनाकार्याः अनंतरंक्रसमिद्भ्यावाधाधाना घाघारांतंकर्मकृत्वा आदित्याद्युद्देशेनयथाक्रमंवक्ष्यमाणमंत्रैर्वक्ष्यमाणाः समि
धोवक्ष्यमाणप्रकारेणहुत्वाचरवोहोतव्याः २९६ २९७ २९८ मंत्रानाह आकृष्णेनरजसावर्तमानइत्यादयोनवमंत्राः यथाक्रममादित्यादीनांवेदि

आकृष्णेनइमंदेवा अग्निर्मूर्धादिवःककुत् उद्बुध्यस्वेतिचऋचोयथासंख्यंप्रकीर्तिताः २९९ बृहस्पतेअति
यदर्यस्तथैवान्नात्परिस्रुतः शंनोदेवीस्तथाकांडात्केतुंकृण्वन्निमांस्तथा ३०० अर्कःपलाशखदिरअपमा
र्गोथपिप्पलः औदुंबरःशमीदूर्वाकुशाश्चसमिधःक्रमात् ३०१ एकैकस्यत्वष्टशतमष्टाविंशतिरेवच होत
व्यामधुसर्पिर्भ्यांदध्नाक्षीरेणवायुताः ३०२

तव्याः २९९ ३०० इदानींसमिधआह अर्कपलाशादयोयथाक्रमंसूर्यादीनांसमि
धोभवंति ताश्चसार्द्रा अभग्नाः सत्वचः प्रादेशमात्राः कर्त्तव्याः ३०१ किंच आदित्यादीनामेकैकस्याष्टशतसंख्या अष्टाविंशतिसंख्या वायथा
संभवंमधुनासर्पिषादध्नाक्षीरेणवायुता अक्ताः अर्कादिसमिधोहोतव्याः ३०२

किंच अग्नेः सकाशादग्निसाध्यात् भूरिदक्षिणात् राजसूयादेरपि विप्राग्नौ हुतं श्रेष्ठमिहोच्यते यत एतदस्कन्नं स्खरणरहितं अव्यथं पशुहिंसार-
हितं प्रायश्चित्तैरदूषितं प्रायश्चित्तायासरहितं ३१५ वसूनि विप्रेभ्यो दद्यादित्युक्तं कया परिपाट्या दद्यादित्याह अलब्धलाभाय धर्मशास्त्रानुसारे-
णयतेत यत्नेन लब्धं तत्परिपालयेत् स्वयमवेक्षया रक्षेत् पालितं नीत्या वाणिज्यादिक्रियया वर्द्धयेत् वृद्धं च पात्रेषु त्रिविधेषु धर्मार्थकामपात्रेषु
निक्षिपेत् दद्यात् ३१६ पात्रे निक्षिप्य किं कुर्यादित्याह यथोक्तविधिना भूमिं दत्त्वा स्वत्वनिवृत्तिं कृत्वा निबंधं वा एकस्य भांडभरस्य इयंतो रूपकाः एकस्य

अस्कन्नमव्यथं चैव प्रायश्चित्तैरदूषितम् अग्नेः सकाशाद्विप्राग्नौ हुतं श्रेष्ठमिहोच्यते ३१५ अलब्ध-
मीहेद्धर्मेण लब्धं यत्नेन पालयेत् पालितं वर्धयेन्नीत्या वृद्धं पात्रेषु निक्षिपेत् ३१६ दत्त्वा भूमिं निबंधं
वा कृत्वा लेख्यं तु कारयेत् आगामिभद्रनृपतिपरिज्ञानाय पार्थिवः ३१७ पटे वा ताम्रपट्टे वा स्वमुद्रो-
परिचिह्नितम् अभिलेख्यात्मनो वंश्यानात्मानं च महीपतिः ३१८

पर्णभरस्य इयंति पर्णानीति वा निबंधं कृत्वा लेख्यं कारयेत् किमर्थमागामिनः एष्यंतो ये भद्राः साधवो नृपतयो भूपास्तेषामनेन दत्तमनेन प्रतिगृही-
तमिति परिज्ञानाय पार्थिवो भूपतिः अनेन भूपतेरेव भूमिदाने निबंधदाने वाधिकारो न भोगपतेरिति दर्शितं ३१७ लेख्यं कारयेदित्युक्तं कथं कारयेदि-

स्वाह कार्पासिके पटेताम्रपट्टफलकेवा आत्मनोवंश्यान्प्रपितामहपितामहपितॄन् वहुवचनम्यार्यक्तायवशावीर्यश्रुताद्विगुणोपवर्णनपूर्वक
मभिलेख्यात्मानन्तशव्दात्मतिग्रहीतार मतिग्रहपरिमाणंदानच्छेदोपवर्णनञ्चाभिलेख्य प्रतिगृह्यतइति प्रतिग्रहोनिबंधस्तस्यरूपकादिपरिमा
ण दीयतेइतिदानं क्षेत्रादितस्य छेद् छिद्यते अनेनेतिछेद नद्याद्याघाटादौनिवर्त्तनन्तत्परिमाणञ्चतस्योपवर्णन अमुकनद्यादक्षिणतोयंग्राम से
त्रपूर्वतोमुकग्रामस्यैतावन्तिवर्त्तनमित्यादिनिवर्त्तनपरिमाणञ्चोस्यमव आघाटस्यनदीनगरवर्त्मादि स्वारिकन भूमेर्न्यूनाधिकभावसंभवात्त

प्रतिग्रहपरीमाणदानच्छेदोपवर्णनम् स्वहस्तकालसंपन्नशासनकारयेत्स्थिर ३१९

न्निरूसर्यस्वहस्तेनस्वहस्तलिखितेनमतमेभमुकनाम्न अमुकपुत्रस्यपदस्यापरिलेखितमित्यनेनसंपन्नसुकमर्केनवादिविधेनशकनृपातीत
रूपणसंवत्सररूपणन्नकालेनचन्द्रसूर्योपरागादिनासंपन्नस्त्समुद्रागस्लवाराहादिरूपयोपरिवाहमिन्हितआंकित स्थिरदृढशासनशिष्यतेभवि
ष्यतोनृपतयः अनेन दानात्यूर्योनुपालनमितिशासनकारयेत् महीपतिर्निमोगपति संधिविग्रहादिकारिणानपनकेनचित् संधिविग्रहकारीतुभ
वेयस्तस्यलेखकः स्वयंराज्ञासमादिष्टःसलिखेद्राजशासनमितिस्मरणात् दानमात्रेणैवदानफलेसिद्धेशासनकारणभोगाभिवृध्यापत्यभिसंपार्थम्

इदानींराज्ञोनिवासस्थानमाह रम्यंरमणीयंअशोकचंपकादिभिः पशव्यंपशुभ्योहितंपशुवृद्धिकरं आजीव्यमुपजीव्यंकंदमूलपुष्पफलादिभिः
जांगलंयद्यप्यल्पोदकतरुपर्वतोदेशोजांगलः तथाप्यत्रसजलतरुपर्वतोदेशोजांगलशब्देनाभिधीयते तंदेशमावसेदधिवसेत् तत्रैवंविधेदेशेज-
नानांकोशस्यसुवर्णादेरात्मनश्चरक्षणार्थंदुर्गंकुर्वीत दुर्गंचषड्विधं यथाहमनुः धन्वदुर्गंमहीदुर्गमब्दुर्गंवार्क्षमेवच नृदुर्गंगिरिदुर्गंचसमाश्रित्य
वसेत्पुरमिति ३२० किंच तत्रतत्रधर्मार्थकामादिषुअध्यक्षान्योग्यानधिकारिणः प्रकुर्यान्नियुंजीत यथाहुः धर्मकृत्येषुधर्मज्ञानर्थकृत्येषुपंडिता

रम्यंपशव्यमाजीव्यंजांगलंदेशमावसेत् तत्रदुर्गाणिकुर्वीतजनकोशात्मगुप्तये ३२० तत्रतत्रचनिष्णा
तानध्यक्षान्कुशलान्शुचीन् प्रकुर्यादायकर्मांतव्ययकर्मसुचोद्यतान् ३२१

न् स्त्रीषुक्लीबान्नियुंजीतनीचान्निर्येषुकर्मस्विति कीदृशान्निष्णातान् अनन्यव्यापारान्कुशलान्तत्तद्व्यापारचतुरान् शुचीन्चतुर्विधोप
धाशुद्धान् आयकर्मसुसुवर्णाद्युत्पत्तिस्थानेषुव्ययकर्मसुसुवर्णादिदानस्थानेषुउद्यतान् अनलसान् चशब्दात्प्राज्ञत्वादिगुणयुक्तान् उक्तंच या
औ० ३ निरुदकेनपंचयोजनेनदेशेनसमंततोव्याप्तंधन्वदुर्गं पाषाणेष्टकायुतद्वादशहस्तोच्छ्रितेनबहुविस्तृतेनयुद्धार्थमुपरिभ्रमणयोग्येनसाधारणगवाक्षादियुक्तेन
प्रकारेणसमंतादेष्टितसद्वारंमहीदुर्गं अगाधोदकेनसमंततोवेष्टितंअब्दुर्गं वृक्षजन्यंवार्क्षं चतुरंगबलजंनृदुर्गं गिरिणावेष्टितंगिरिदुर्गं

अनसूयया शुद्धिरप्रमादो भिक्षुकता अर्थं पुण्यमनामाय स्वाभिमतिकं भोग्यनीति ३२१ भोगाश्च दद्याद्विप्रेभ्यो वसूनि विविधानि चेति सामान्येनस्व
स्वदानमुक्त इदानीं नृपाणामधिकमर्जितस्य दाने फलातिशयमाह अस्मादुत्कृष्टतमो धर्मो नृपाणां न विद्यते यद्रणार्जितं द्रव्यं विप्रेभ्यो दीयते प्रजाभ्यश्चा-
भयं दत्तम् ८२ रणार्जितदेयभिक्षुक द्रव्यार्जनाय रणे प्रवृत्तस्य विपत्तिरपि संभवतीति न धर्मो नाप्यर्थ इति ततो निवृत्तिरेव श्रेयसीत्यत आह ये मृ-
ध्याय यमाहवेषु प्रवृत्ता अपराङ्मुखा अभिमुखा वध्यन्ते मार्यन्ते ते स्वर्गं यान्ति यागाभ्यासेरत्नयया यथा कूटैरविषदिग्धादिभिरायुधैर्योद्धारो भवन्ति ३२२

नातः परतरो धर्मो नृपाणां यद्रणार्जितम्। विप्रेभ्यो दीयते द्रव्यं प्रजाभ्यश्चाभयं सदा ३२२ य आहवेषु
वध्यन्ते भूम्यर्थमपराङ्मुखाः अकूटैरायुधैर्यान्ति ते स्वर्गं योगिनो यथा ३२३ पदानि क्रतुतुल्यानि भग्ने
ष्वविनिवर्तिनाम् राजा सुकृतमादत्ते हतानां विपलायिनाम् ३२४ न चाहवादिनं क्लीबं नहितेति परसङ्गतम्
नहन्याद्विनिवृत्तं च युद्धप्रेक्षणकादिकम् ३२५

किञ्च स्वचनेषु करिवुरगरथपदातिषु भग्नेष्वनिवर्तिनां परवलाभिमुखयायिनां
पदानि क्रतुतुल्यानि अश्वमेधतुल्यानि विपर्यये दोषमाह विपलायिनां पराङ्मुखानां हतानां राजा सुकृतमादत्ते ३२४ अपि च न चाहवा भीतियो वदाति न
क्लीबं न पुंसकं निर्हेतिं निरायुधं परसङ्गतमन्येन सह युध्यमानं विनिवृत्तं युद्धादिनिष्पत्तं युद्धप्रेक्षणको युद्धदर्शी तमपि न हन्यादिति सर्वत्र सम्बन्धः आ

दिग्रहणादश्वसारथ्यादीनांग्रहणं यथाहगौतमः नदोषोहिंसायामावहेन्यत्राश्वसारथ्यनायुधकृतांजलिप्रकीर्णकेशपराङ्मुखोपविष्टस्थलवृ-
क्षारूढदूतगोब्राह्मणवादिभ्यइति शंखोप्याह नपानीयपिबंतंन भुंजानंनोपानहौमुंचंतंनावर्माणंसवर्माणंनस्त्रियंनकरेणुंनवाजिनंनसारथिंन
दूतंनब्राह्मणंनराजानमराजाहन्यादिति ३२५ कृतरक्षःपुरस्यात्मनश्चरक्षांविधायप्रतिदिनंप्रातःकालउत्थायस्वयमेवायव्ययौपश्येत् ततोव्यव
हारान्दृष्ट्वामध्यान्हकालेस्नात्वाकामतोयथाकालंभुंजीत ३२६ तदनंतरंहिरण्यादिकंव्यापृतैर्हिरण्याद्यानयननियुक्तैरानीतंस्वयमेवनिरीक्ष्यभां

कृतरक्षःसमुत्थायपश्येदायव्ययौस्वयम् व्यवहारांस्ततोदृष्ट्वास्नात्वाभुंजीतकामतः ३२६ हिरण्यंव्यापृतानीतं भांडागारे
षुनिक्षिपेत् पश्येच्चारांस्ततोदूतान्प्रेषयेन्मंत्रिसंगतः ३२७

डागारेषुनिक्षिपेत् ततश्चारान्विश्वस्तान्प्रत्यागतान्पश्येत् येपरराज्येवृत्तांतपरिज्ञा
नायपरिव्राजकतापसादिरूपेणगूढचारिणःप्रेषितास्तांश्चारान्दृष्ट्वाकंचिन्निवेशयेत् तदनंतरंदूतांश्चपश्येत् दूताश्चयेप्रकटमेवराजांतरंप्रतिगतागत-
मान्यंते तेचत्रिविधाः निसृष्टार्थाःसंदिष्टार्थाः शासनहराश्चेति तत्रनिसृष्टार्थाःराजकार्याणिदेशकालोचितानिस्वयमेवकथयितुंक्षमाःउक्तमात्रंयेपरस्मै
निवेदयंतितेसंदिष्टार्थाः शासनहरास्तुराजलेखहारिणः तान्पूर्वप्रेषितानागतान्मंत्रिसंगतःपश्येत् दृष्ट्वातद्वार्तामाकलय्यपुनःप्रेषयेत् ३२७ ७

सह एकाकीवापश्चिमेयामेशास्त्राणिचिंतयेत् सर्वकर्त्तव्यताश्चसर्वकार्याणिच एतच्चस्वस्थंप्रत्युच्यते अस्वस्थःपुनः सर्वकार्येषु अन्यान्नियोजयेत् यथा
हमनुः एतद्वृत्तंसमातिष्ठेदरोगः पृथिवीपतिः अस्वस्थःसर्वमेवैतन्मंत्रिमुख्येनिवेशयेदिति ३३० अनंतरंतत्रस्थएवविश्वस्तान्स्वान्चारान्दानमानस-
त्कारैः पूजितान्स्वेषुसामंताद्यधिकारिषु अन्येषुमहीपतिषुप्रेषयेत् तच्चिकीर्षितपरिज्ञानाय ततःप्रातःसंध्यामुपास्याग्निहोत्रंहुत्वापुरोहितलिंगाचा
र्यादिभिराशीर्भिरभिनंदितोज्योतिर्विदोदृष्ट्वातेभ्यश्चग्रहादिस्थितिंविदित्वाशांतिकादीनिचपुरोहितायादिश्यवैद्यांश्चदृष्ट्वातेभ्यश्चस्वशरीरस्थितिं-

प्रेषयेच्चततश्चारान्स्वेष्वन्येषुचसादरान् ऋत्विक्पुरोहिताचार्यैराशीर्भिरभिनंदितः ३३१ दृष्ट्वाज्योतिर्विदोवैद्यान्दद्याद्गां
कांचनंमहीम् नैवेशिकानिचततःश्रोत्रियेभ्योगृहाणिच ३३२ ब्राह्मणेषुक्षमीस्निग्धेष्वजिह्मःक्रोधनोरिषु स्याद्राजाभृत्य
वर्गेषुप्रजासुचयथापिता ३३३

निवेद्यप्रतिविधानंचादिश्य गांदोग्ध्रींकांचनंमहींच नैवेशिकानिविवाहोपयोगीनिकन्यालंकारादीनिगृहाणि
चस्कधापवलितादीनिश्रोत्रियेभ्योधीतवेदेभ्योब्राह्मणेभ्योदद्यादितिप्रत्येकंसंबध्यते ३३१ ३३२ किंच ब्राह्मणेष्वधिक्षिपत्स्वपिक्षमीक्षमावान् स्नि
ग्धेषुस्नेहवत्सुमित्रादिष्वजिह्मः अवक्रः अरिषुक्रोधनः भृत्यवर्गेषुप्रजासुचाहितान्वरणेनाहितनिवर्तनेनचपितेवदयावान्स्यादितिप्रत्येकंसंबध्यते ३३३

राष्ट्रे राज्ञा अधिकारेषु ये नियुक्तास्तेषां विचेष्टितं चरितं चारैरुक्तलक्षणैः सम्यक् ज्ञात्वा साधून्सच्चरितान् संमानयेत् दानमानसत्कारैः पूजयेत्
विपरीतान्दुष्टचारित्रान् सम्यग्विदित्वा घातयेत् अपराधानुसारेण ये पुनरुत्कोचजीविनस्तान्द्रव्यरहितान् कृत्वा स्वराष्ट्रात्प्रवासयेत् श्रोत्रियान्स
दानमानसत्कारैः सहितान्कृत्वा स्वराष्ट्रे स्वदेशे सदैव वासयेत् ३३७ ३३८ योसौ राजा स्वराष्ट्रादन्यायेन द्रव्यमादाय स्वकोशं विवर्धयेत्सोचि
राच्छीघ्रमेव विगतश्रीको विनष्टलक्ष्मीकः बंधुभिः सहनाशं प्राप्नोति ३३९ प्रजानां तस्करादिकृतपीडनेन यः संतापस्तस्मादुद्भूतो हुताशन इव सं

ये राष्ट्राधिकृतास्तेषां चारैर्ज्ञात्वा विचेष्टितम् साधून्संमानयेद्राजा विपरीतांश्च घातयेत् ३३७ उत्कोचजीविनो
द्रव्यहीनान्कृत्वा विवासयेत् सदानमानसत्कारान् श्रोत्रियान्वासयेत्सदा ३३८ अन्यायेन नृपो राष्ट्रात्स्वकोशं
योभिवर्धयेत् सोचिराद्विगतश्रीको नाशमेति सबांधवः ३३९ प्रजापीडनसंतापात्समुद्भूतो हुताशनः राज्ञः कु
लं श्रियं प्राणांश्चादग्ध्वा न निवर्तते ३४० य एव नृपतेर्धर्मः स्वराष्ट्रपरिपालने तमेव कृत्स्नमाप्नोति परराष्ट्रं वशं
नयन् ३४१

तापकारित्वादपुण्यराशिर्हुताशनशब्देनोच्यते स राज्ञः कुलं श्रियं प्राणांश्चादग्ध्वा नाशमनीत्वा न निवर्तते नोपशाम्यति ३४०
न्यायतः स्वराष्ट्रपरिपालने राज्ञो यो धर्मस्तं सकलं वक्ष्यमाणन्यायेन परराष्ट्रं वशं नयन् आत्मसात्कुर्वन्प्राप्नोति धर्मषड्भागं च ३४१ छ छ

न्नपरिपालनफलमाह यस्मान्न्यायेनशास्त्रोक्तमार्गेण प्रजाः परिपालयन् परिपालितप्रजोपचितपुण्यात् षड्भागषष्ठभागमादत्ते यस्मात्स्वसर्वेभ्यो
भूम्यादिदानेभ्य प्रजानापरिपालनमधिकफलं तस्मात्प्रजासु यथापितान थैवस्यादितिगतनसवृध ३२४ सदाः प्रतारकाः विश्वासेपरधनमपहरं
प्रच्छन्नापहारिणस्तस्कराः दुर्वृत्ताः ऐन्द्रजालिककितवादयः सहोबलसहसावलेन कृतसाहसमहाधिसाहसञ्चमहासाहसतेनवर्त्ततेइतिमहासा
हसिकाः प्रसह्यापहारिणः आदिशब्दान्मौल्लिककुहकप्रभृतयः एतैः पीड्यमानाः बाध्यमानाः प्रजारक्षेत् कायस्थागणकालेखकास्तैः पीड्यमाना

पुण्यात्षड्भागमादत्तेन्यायेनपरिपालयन् सर्वदानाधिकयस्मात्प्रजानापरिपालनम् ३३४ चाटतस्करदुर्वृत्त
महासाहसिकादिभि पीड्यमानाः प्रजारक्षेत्कायस्थैश्चविशेषतः ३३५ अरक्ष्यमाणाःकुर्वन्तियत्किंचित्किल्बि
षंप्रजाः तस्मात्तुनृपतेरर्धयस्माद्गृह्णात्यसौकरान् ३३६



विशेषतोरक्षेत् तेषाराजवल्लभसमानिमायाविलासादुर्निवारत्वात् ३३५ अरक्ष्यमाणाः प्रजाः यत्किंचित्किल्बिषचौर्यपरदारगमनादिकु
र्वन्तितस्मात्पापादर्धंनृपतेर्भवति यस्मादसौराजारक्षणार्थंप्रजाभ्यः करान्गृह्णाति ३३६

राष्ट्रेराज्ञाअधिकारेषुयेनियुक्तास्तेषांविचेष्टितंचरितंचारैरुक्तलक्षणैःसम्यक्ज्ञात्वासाधून्सच्चरितान्संमानयेत् दानमानसत्कारैःपूजयेत्
विपरीतान्दुष्टचारित्रान्सम्यग्विदित्वाघातयेत् अपराधानुसारेण येपुनरुत्कोचजीविनस्तान्द्रव्यरहितान्कृत्वास्वराष्ट्रात्प्रवासयेत् श्रोत्रियान्स
दानमानसत्कारैःसहितान्कृत्वास्वराष्ट्रेस्वदेशेसदैववासयेत् ३३७ ३३८ योसौराजास्वराष्ट्रादन्यायेनद्रव्यमादायस्वकोशंविवर्धयेत्सोचि
राच्छीघ्रमेवविगतश्रीकोविनष्टलक्ष्मीकः बंधुभिःसहनाशंप्राप्नोति ३३९ प्रजानांतस्करादिकृतपीडनेनयःसंतापस्तस्मादुद्भूतोहुताशनइवसं

येराष्ट्राधिकृतास्तेषांचारैर्ज्ञात्वाविचेष्टितम् साधून्संमानयेद्राजाविपरीतांश्चघातयेत् ३३७ उत्कोचजीविनो
द्रव्यहीनान्कृत्वाविवासयेत् सदानमानसत्कारान्श्रोत्रियान्वासयेत्सदा ३३८ अन्यायेनन्नृपोराष्ट्रात्स्वकोशं
योभिवर्धयेत् सोचिराद्विगतश्रीकोनाशमेतिसबांधवः ३३९ प्रजापीडनसंतापात्समुद्भूतोहुताशनः राज्ञःकु
लंश्रियंप्राणांश्चादग्ध्वाननिवर्त्तते ३४० यएवन्नृपतेर्धर्मःस्वराष्ट्रपरिपालने तमेवकृत्स्नमाप्नोतिपरराष्ट्रंवशं
नयन् ३४१

तापकारित्वाद्दुष्प्रयराशिर्हुताशनशब्देनोच्यते सराज्ञः कुलंश्रियंप्राणांश्चादग्ध्वानाशमनीत्वाननिवर्त्ततेनोपशाम्यति ३४०
न्यायतःस्वराष्ट्रपरिपालनेराज्ञोयोधर्मस्तंसकलंवक्ष्यमाणन्यायेनपरराष्ट्रंवशंनयन् आत्मसात्कुर्वन्प्राप्नोतिधर्मषड्भागंच ३४१ छ छ

किंच यदापरदेशोवशमुपागत तदानस्वदेशाचारादिसंकरः कार्य यस्मिन्देशे आचार कुलस्थितिर्व्यवहारो वा यथैवभागासीत्तथैवासौ परिपा लनीयः यदिशास्त्रविरुध्येन भवति यदावशमुपागत इत्यनेनवशोपगमनात्प्रागविभ्रमइतिदर्शित यथोक्तउपरुध्यारिमासीतराष्ट्रंचास्योपपीड येत् दूषयेच्चास्यसततयवसान्नोदकेंधनमिति ३४२ यस्मात्तेऽसार्धस्वितयद्राज्यमित्याधुक्तभ्रंभ मूलराज्यतस्मान्मयत्नेनतयासुरक्षितकुर्यात् यथास्यराज्ञः कर्मणासंधिविग्रहादीनामाफलोदयात्फलनिष्पत्तिभागयावदन्येमभनजानंति ३४३ किंच अरिश्चशत्रुः मित्रसुहृत्तउभयविलक्ष

यस्मिन्देशेय आचारोव्यवहार कुलस्थिति तथैवपरिपाल्योसोयदावशमुपागत् ३४२ मन्त्रमूलयतोराज्य
तस्मान्मन्त्रसुरक्षितम् कुर्याद्यथास्यनविदुः कर्मणामाफलोदयात् ३४३ अरिर्मित्रमुदासीनोनन्तरस्तत्परःप
र क्रमशोमंडलंचित्यसामादिभिरुपक्रमेः ३४४

णउदासीनस्तेत्रयस्त्रिविधाः सहजाः कृत्रिमाः प्राकृताश्चेति तत्रसह जोरि सापत्नपितृव्यतत्सुतादि कृत्रिमोरि यस्यापकृतयेनचापकृत प्राकृतस्त्वनंतरदेशाधिपति सहजमित्रभागिनेयपैतृष्वस्रीयमातृष्व स्रीयादि कृत्रिममित्रयेनोपकृतयस्यचोपकृत प्राकृत मित्रमेकांतरितदेशाधिपति सहजकृत्रिममित्रशत्रुलक्षणरहितोसहजकृत्रिमोदासीनो प्राकृतोदासीनोद्व्यंतरितदेशाधिपतिः अरिस्यचतुर्विधः यातव्योच्छेत्तव्यपीडनीयकर्शनीयभेदेन तत्रयातव्योनंतरभूपतिः व्यसनी हीनबलोवि

रक्तप्रकृतिर्विदुर्गो मित्रहीनो दुर्बलश्चोच्छेतव्यः पीडनीयो मंत्रबलहीन प्रबलाभग ब ७ युक्तः कर्शनीयः निर्मूलनाशमुच्छेदं पीडनं बलनि ग्रहं कर्शनं तु पुनः आहुः कोशदंडापकर्षणादिति मित्रं द्विविधं बृंहणीयकर्शनीयमिति कोशबलहीनं बृंहणीयं कोशबलाधिकं कर्शनीयं अनंतरस्तत्परः पर इति प्राकृतारिमित्रोदासीनानाह अनंतरः प्राकृतोऽरिः तत्परः प्राकृतमित्रं तस्मात्परः प्राकृत उदासीनः शेषाः पुनः प्रसिद्धत्वान्नोक्ताः एतद्राजमंडलं क्रमशः पूर्वादिक्रमेण विन्यस्य तेषां चेष्टितं ज्ञातव्यं ज्ञात्वा च सामादिभिरुपायैर्वक्ष्यमाणैस्तु संधेयं एवं पुरतः पृष्ठतः पार्श्वतश्च त्रयस्त्रय आत्मा चैक इति त्रयोदशराजकमिदं राजमंडलं पद्माकारं पार्ष्णिग्राहाक्रंदासारादयस्त्वरिमित्रोदासीनेष्वेवांतर्भवंति संज्ञाभेदमात्रं ग्रंथांतरे दर्शितमिति योगीश्वरेण न पृथगुक्ताः ३४४

उपायाः साम दानं च भेदो दंडस्तथैव च सम्यक्प्रयुक्ताः सिध्येयुर्दंडस्त्वगतिका गतिः ३४५

सामादिभिरुपक्रमेदित्युक्तं इदानीं तानुपायानाह सामप्रियभाषणं दानं स्ववर्णादेः भेदो भेदकरणं तत्सामंतादीनां परस्परतो वैरस्योत्पादनं दंड उपांशुप्रकाशाभ्यां धनापहारादिर्वधपर्यंतोपकारः एते सामादयः परिपंथ्यादिसाधनोपायाः एते च देशकालाद्यनुसारेण सम्यक्प्रयुक्ताः सिध्येयुः तेषां च मध्ये दंडस्त्वगतिका गतिः उपायांतरसंभवे सति न प्रयोक्तव्यः एतच्च पीडनीयकर्शनीयाभिप्रायेण यातव्योच्छेत्तव्ययोर्दंड एव मुख्यः एते सामादयो न केवलं राजव्यवहारविषयाः अपितु सकललोकव्यवहारविषयाः यथा अधीष्व पुत्रकाधीष्व दास्यामि ते मोदकान् यद्वान्यस्मै प्रदास्यामि कर्णमुत्पाटयामि ते इति ३४५

इदानींमतांतराण्याह केचिदिष्टानिष्टलक्षणफलंदैवादेवेच्छंति केचित्स्वभावा स्वयमेवभवंति नकारणमपेक्षंत इति केचित्कालात्केचित्पुरुष कारतएवेति स्वमतमाह दैवादीनांसंयोगेसमुच्चये फलंभवतीतिकुशलबुद्धयोमन्वादयोमन्यंते ३४९ एकैकस्मात्फलंनभवतीत्यत्र दृष्टांतमा ह नात्रतिरोहितमस्ति ३५० लाभायपरराष्ट्रंगंतव्यमित्युक्तं लाभश्चत्रिविध. हिरण्यलाभोभूलाभोमित्रलाभश्चेति तेषुमित्रलाभोज्यायान् त तस्तत्साध्युपायेयत्नोविधातव्यः तत्साध्युपायश्चसत्यवचनमित्याह यस्माद्धिरण्यभूमित्रलाभेभ्योमित्रलब्धिर्वराउत्कृष्टातस्मात्तत्साध्यैयतेतयत्न

केचिद्दैवात्स्वभावाद्वाकालात्पुरुषकारतः संयोगेकेचिदिच्छंतिफलंकुशलबुद्धयः ३४९ यथाह्येकेनचक्रे णरथस्यनगतिर्भवेत् एवंपुरुषकारेणविनादैवंनसिध्यति ३५० हिरण्यभूमिलाभेभ्योमित्रलब्धिर्वरायतः अतोयतेततत्प्राप्त्यैरक्षेत्सत्यंसमाहित. ३५१ स्वाम्यमात्याजनोदुर्गंकोशोदंडस्तथैवच मित्राण्येताःप्रकृत योराज्यंसप्तांगमुच्यते ३५२

कुर्यात् सामादिभि· सत्यंचरक्षेत् समाहितःसावधानः सत्यमूलत्वान्मित्रलाभस्य ३५१ इदानींरा ज्यागान्याह महोत्साहइत्याद्युक्तलक्षणोमहीपतिःस्वामी भमात्यामंत्रिपुरोहितादयःजनोब्राह्मणादिप्रजाः दुर्गंधन्वदुर्गादि कोशःसुवर्णादिधनरा [illegible] स्वल्पंनेहस्वामिरथपतिलक्षणंनतुरंगंभंरं [illegible] ...समप्राकृतानि एता·स्वाम्याद्याःराज्यस्यप्रकृतयोमूलकारणानि एवंराज्यंसप्तांगमुच्यते ३५२

देशविधरान्यमाप्यदुर्वृत्तेषुक्वचकश्चत्पूर्तपरदारपरद्रव्यापहारिहिंसकादिषुनृपोदंडपातयेत्प्रयोजयेत् हियस्माद्धर्मएवदंडरूपेणपूर्वंब्रह्मणानि
र्मितोस्यचदंडइतियोगिकीसंज्ञा दंडोदमनादित्याहुः तेनादातान्दमयेदित्यादिगौतमस्मरणात् ३५३ सपूर्वोक्तोदंडोलुब्धेनक्षपणेनाकृतबुद्धिना
चनलघुदिनान्यायतोन्यथाशास्त्रानुसारेणनेतुमयोक्तुंशक्योनभवति कीदृशेनतर्हिशक्यइत्याह सत्यसंधनाभनारकेणसुधिनाजितारिषडुर्गेणक्रसहाये
नपूर्वोक्तसहायसाहनेनधीमतानयानयकुशलेनसदंडोन्यायतोधर्मानुसारेणनेतुंशक्यः ३५४ सदंडःशास्त्रोक्तमार्गेणप्रयुज्यमानः सन्देवासुरमानवे

तदवाप्यनृपोदंडंदुर्वृत्तेषुनिपातयेत् धर्मोहिदंडरूपेणब्रह्मणानिर्मितःपुरा ३५३ सनेतुंन्यायतोशक्योलु
ब्धेनाकृतबुद्धिना सत्यसंधेनशक्येनासहायेनधीमता ३५४ यथाशास्त्रंप्रयुक्तःसन्सदेवासुरमानवम् जग
त्आनंदयेत्सर्वमन्यथातत्प्रकोपयेत् ३५५ अधर्मदंडनंस्वर्गकीर्तिलोकाश्वनाशयेत् सम्यक्तुदंडनंराज्ञःस्वर्गकी
र्तिजयावहम् ३५६

सहितंइदंसर्वंजगदानंदयेन्हर्षयेत् अन्यथाशास्त्रातिक्रमणप्रयुक्तस्चेत्जगत्प्रकोपयेत् ३५५ नकेवल
मधर्मदंडेनजगत्प्रकोप अपितुप्रयोक्तुर्दृष्टादृष्टहानिरपीत्याह यःपुनःशास्त्रातिक्रमेणलोभादिनादंडःकृतःसपापहेतुत्वात्स्वर्गकीर्तिलोकाश्च
विनाशयतीति शास्त्रोक्तमार्गेणानुकृतःधर्महेतुत्वात्स्वर्गकीर्तिजयानांहेतुर्भवति ३५६ ५ ५ ५ ५

अर्घ्योर्घार्ह आचार्यादिः शेषमसिद्धं एतेष्वानृकृताद्योपिस्वधर्माच्चलिता दंड्याः किमुतान्ये यतःस्वधर्माच्चलितः अदंड्योनामराज्ञः कोपिनास्ति ए
तच्च मातापित्रादिव्यतिरेकेण तथाच स्मृत्यंतरं अदंड्यौ मातापितरौ स्नातकपरिव्राजकपुरोहितवानप्रस्थाः श्रुतशील शौचाचारवंतस्ते हि धर्माधिकारि
णइति ३५७ किंच यस्तु दंड्यान्स्वधर्मचलनादिना दंडयोग्यान् सम्यक्शास्त्रदृष्टेन मार्गेण धिग्धनदंडादिना दंडयति वध्यान्वधार्हान् घातयति ते
नराज्ञा भूरिदक्षिणैः क्रतुभिरिष्टं भवति बहुदक्षिणक्रतुफलं प्राप्नोतीत्यर्थः नच फलश्रवणाद्दंडप्रणयनं काम्यमिति मंतव्यं अकरणे प्रायश्चित्तस्मरणा

अपि भ्राता सुतोर्घ्यो वा श्वशुरो मातुलोपि वा नादंड्यो नाम राज्ञोस्ति धर्माद्विचलितः स्वकात् ३५७ यो दंड्यान्दं
डयेद्राजा सम्यग्वध्यांश्च घातयेत् इष्टं स्यात्क्रतुभिस्तेन समाप्तवरदक्षिणैः ३५८ इति संचिंत्य नृपतिः क्रतुतुल्य
फलं पृथक् व्यवहारान्स्वयं पश्येत्सभ्यैः परिवृतोन्वहम् ३५९

त्र यथाह वसिष्ठः दंडोत्सर्गे राजैकरात्रमुपवसेत् त्रिरात्रं पुरोहि
तः कृच्छ्रमदंड्यदंडने पुरोहितस्त्रिरात्रं राजेति ३५८ दुष्टे सम्यग्दंडः प्रयोक्तव्य इत्युक्तं दुष्टपरिज्ञानं च व्यवहारदर्शनमंतरेण न भवतीति तत्परिज्ञा
नाय व्यवहारदर्शनमहरहः स्वयं कर्त्तव्यमित्याह इत्येवमुक्तप्रकारेण क्रतुतुल्यं फलं दंड्ये दंडेन स्वर्गादिनाशं चादंड्यदंडेन सम्यग्विचिंत्य पृथक्पृथ
क्वर्णादिकं ... वक्ष्यमाणमार्गेण दुष्टादुष्टपरिज्ञानार्थं राजा स्वयं पश्येत् ३५९ ७ ७

ष्ट्वानिवासगणादीना आतयो मूर्धावसिक्तप्रभृतयः श्रेणयस्ताम्बूलिकादीनां गणाह्वेन्भ्रुकादीनां जानपदाः काकुकादय एतान्स्वधर्माच्चलितान्
भ्रष्टुतान्राजा पथ्यपराधशिनीयदंडयित्वा पथि स्वधर्मे स्थापयेत् दंडदुर्दतस्पुनिपातयोदिरुक्त अवदंडोद्विविध शारीरोर्थदंडश्चेति यथाहना
रदः शारीरस्त्वर्थदंडस्वदबकादिविधस्स्मृतः शारीरस्ताडनादिकमरणान्त मकीर्तितं काकिण्यादिस्त्वर्थदंडः सर्वस्वान्तस्तथैवचेति द्विविधोप्य
पराधानुसारेणानेकधा भवति आह स्म शारीरोदंडधामोक्तोत्मर्थदंडस्त्वनेकधेति तत्र हघ्यन्लमाषकवर्णपलादिशब्दैरर्थदंडानकथ्यास्तेच

कुलानिजातीःश्रेणीश्चगणान्जानपदानपि स्वधर्माच्चलितान्राजाविनीयस्थापयेत्पथि २६०
जालसूर्यमरीचिस्थंत्रसरेणूरजः स्मृतम् तेष्टौलिक्षास्तुतास्तिस्रोराजसर्षपउच्यते २६१

मानदेशभिन्नपरिमाणार्थाः ह्यनेकरूपाः प्रायेपिदेशभेदेनन्यूनाधिकदंडोमाभूदितिकृष्णलादिशब्दानांनियतपरिमाणविषयलदंडव्यव
हारेदर्शयितुमाह जालान्तरस्थितेरविरश्मिव्याप्तपद्मजस्तदवरसरेणुभिसंज्ञक योगीश्वरादभिस्तदष्टभिः तेचत्रसरेण्वोष्टौलिक्षासंज्ञा
प्रकाङ तान्लिक्षास्तिस्रोराजसर्षपोभिधियः तद्राजसर्षपास्त्रयोगौरसर्षपः सिद्धार्थः गौरसर्षपाः षट्यवोमध्य मध्यमोनस्थूलोनसूक्ष्मः एतेनकौ

रसर्षपा अपिमध्यमाइतिगम्यते तथाराजसर्षपा अपि मध्यशब्दादेवसर्षपादिशब्दाः नकेवलमुन्मानवचनाः किंतु तदुन्मितद्रव्यवचनाइतिगम्य ते यथाप्रस्थपरिमितायवाः प्रस्थउच्यंते एवंसर्षपाद्युन्मितंद्रव्यंसर्षपादिशब्दैः सर्षपादिशब्दानांच केवलोन्मानवचनत्वेत्रसरेणूनुपसंहृत्योन्मा- तुमशक्यत्वात्तद्वारेण कृष्णलादिव्यवहारोनस्यात् तत्रस्थूलस्थूलतरस्थूलतमसूक्ष्मसूक्ष्मतरसूक्ष्मतममध्यसर्षपाद्युन्मानभेदेनप्रतिदेशव्य वहारभेदेस्थितेदंडव्यवहारेमध्यइतिनियम्यते तेमध्यमायवास्त्रयएकः कृष्णलः तेकृष्णलाः पंचैकोमाषः तेमाषाःषोडशैकः सुवर्णः तेसुवर्णा श्चत्वारः पलमितिसंज्ञाः कथिताइति पंचवापिपलंप्रकीर्तितंनारदादिभि तत्रस्थूलैस्त्रिभिर्यवैः कृष्णलपरिकल्पनायांव्यावहारिकनिष्कस्यषो

गौरस्तुतेत्रयःषट्तेयवोमध्यस्तुतेत्रयः कृष्णलःपंचतेमाषस्तेसुवर्णस्तुषोडश फलंसुवर्णा
श्चत्वारःपंचवापिप्रकीर्त्तितम् २६२

डशांशः कृष्णलोभवति तैःपंचभिर्माषः माषैःषोडशभिःसुवर्णःसचव्याव हारिकैःपंचभिर्निष्कैरेकःसुवर्णोभवति तेचत्वारःपलमिति निष्काणांविंशतिःपलं यदातुसूक्ष्मैस्त्रिभिर्यवैः कृष्णलःपरिकल्प्यतेतदाव्या वहारिकनिष्कस्यद्वात्रिंशत्तमोभागः कृष्णलोभवति तस्मिन्पक्षेसुवर्णःसार्धनिष्कद्वयंभवति पलन्चदशनिष्कं यदातुमध्यमयवैः कृष्णलपरिक ल्पनातदानिष्कस्यविंशतितमोभागःकृष्णलः सुवर्णश्चतुर्निष्कः षोडशनिष्कंपलं एवंपंचसुवर्णपलमितिपक्षेविंशतिनिष्कंपलं एवमन्य-

ऽपानकस्य चत्वारिंशो भागः कृष्णलः ॥ निष्कः सुवर्णोऽथ निष्कपल इत्यादि लोकव्यवहारानुसारेणास्मादेव सूत्रादूहनीयं ३६१ ३६२ एवं
सुवर्णस्योन्मानमभिधायेदानीं रजतस्याह द्वे कृष्णले पूर्वोक्ते रूप्यमाषो रूप्यसंबन्धी माषः ते रूप्यमाषाः षोडश धरणं पुराण इत्यस्यैव संज्ञान्तरम्
षोडशस्यस्य धरणपुराणस्यैकार्थत्वं मनुस्मरणात् दशभिर्धरणैः शतमानं पलं चाभिधीयते पूर्वोक्ताश्चत्वारः सुवर्णा एको रजतो निष्को
भवति ३६३ इदानीं ताम्रस्योन्मानमाह पलस्य तु चतुर्थांशः कर्ष इति लोकप्रसिद्धः कर्षेणोन्मितः कार्षिकः ताम्रस्य विकारस्ताम्रिकः कर्षसम्मित

द्वे कृष्णले रूप्यमाषो धरणं षोडशैव ते शतमानं तु दशभिर्धरणैः पलमेव तु ३६३ निष्कं सुवर्णाश्चत्वारः
कार्षिकस्ताम्रिकः पणः ३६४

ताम्रविकारः पणसंज्ञो भवति कार्षापणसंज्ञकश्च कार्षापणस्तु विज्ञेयस्ताम्रिकः कार्षिक
पण इति मनुस्मरणात् पञ्चसुवर्णपलपक्षे विंशतिमाषः पणो भवति तथा सति माषो विंशतितमो भागः पणस्य पञ्चकार्षिक इत्यादि व्यवहारः सिद्धो भव
ते चतुःसुवर्णपलपक्षे तु षोडशमाषः पणो भवति मतिमत्पक्षे सुवर्णकार्षापणपणशब्दानां समानार्थत्वेऽपि पणकार्षापणशब्दानामविषयत्वेन ए
तावता रूप्यताम्राणामुन्मानमुक्तं दण्डव्यवहारोपयोगित्वात् कांस्यरीतिकादीनामपि लोकव्यवहारानुगमतत्तन्मेयोन्मानं द्रष्टव्यम् ३६४ ५

स्वशास्त्रपरिभाषामाह पणानांसहस्रंपणसाहस्रंतत्परिमाणमस्येतिपणसाहस्रः अशीत्यासहवर्त्ततइतिसाशीतिः अशीत्यधिकपणसहस्रपरिमि
तोयोदंडः सउत्तमसाहससंज्ञोवेदितव्यः तदर्धमध्यमः तस्यसाशीतिपणसाहस्रस्यार्धंचत्वारिंशदधिकपणपंचशतपरिमितो दंडोमध्यमसाहससं-
ज्ञः तदर्धमधमः तस्यचत्वारिंशदधिकपंचशतपणस्यार्धसप्तत्यधिकपणशतद्वयपरिमितो दंडोधम साहससंज्ञः स्मृतउक्तोमन्वादिभिः यत्तुपणानांदश

साशीतिःपणसाहस्रोदंडउत्तमसाहसः तदर्धमध्यमःप्रोक्तस्तदर्धमधमःस्मृतः ३६५ धिग्दंडस्त्वथ
वाग्दंडोधनदंडोवधस्तथा योज्याव्यस्ताःसमस्तावाप्यपराधवशादिमे ३६६

सहस्रंत्वेवचोत्तमइतिमनुनोक्तं तत्सक्षातरममतिपूर्वापराधविषयंद्रष्टव्यं ३६५ दंडभेदानाह धिग्दंडो तेसार्धेप्रथमःसाहसः स्मृतः मध्यमः पंचविज्ञेयः
धिक्धिगतिकुत्सनं वाग्दंडस्तुपरुषशापवचनात्मकः धनदंडोधनापहारात्मकः वधदंडःशारीरोबंधरोधादिर्जीवितांतः एतेचतुर्विधादंडाः व्यस्ताएकैकशः
समस्ताः द्वित्राः त्रिचतुरोवा अपराधानुसारेणप्रयोक्तव्याः उत्क्रमेणपूर्वपूर्वासाध्येउत्तरउत्तरः प्रयोक्तव्यः यथाहमनुः धिग्दंडंप्रथमंकुर्याद्वाग्दंडंतदनंतरं तृती
यंधनदंडंतु वधदंडमतःपरमिति ३६६

दण्ड्येष्वस्थानिपातान्याह यथापराधं ज्ञात्वा तदनुसारेण दण्डप्रणयनमेव देशकालवयः कर्मवित्तानि ज्ञात्वा तदनुसारेण दण्ड्येषु दण्डार्हेषु दण्डप्रणय-
नं कुर्यात् न पुनर्भूयिष्ठमल्पेषु भिर्यसहदण्डस्यानुसारेण च यथापराधज्ञानमधिकृत्याय राजधर्मकलापउक्तस्तथापि वर्णान्तरस्यापि विषयमण्डलादिपरि

ज्ञात्वापराधं देशं च कालं बलमथापि वा वयः कर्म च वित्तं च दण्डं दण्ड्येषु पातयेत् ३६७

पालनाधिकृतस्याय धर्मो वेदितव्यः राजधर्म
न्व स्याभिषयारन्तो भवेन्नृपः स्वनश्यस्तु नृपग्रहणात्क्षत्रियस्य सर्वस्याभिरक्षणस्य दण्डप्रणयनापत्तेरादिति ३६८ इति श्रीपद्मनाभभट्टो
पाध्यायात्मजस्य श्रीमत्परमहंसपरिव्राजकाचार्यविज्ञानेश्वरभट्टारकस्य कृतौ ऋजुमिताक्षरायां याज्ञवल्क्यधर्मशास्त्रविवृतौ सदाचाराध्यायः प्रथमः समाप्तः

उत्तमोपपदस्येयंशिष्यस्यकृतिरात्मनः धर्मशास्त्रस्यविवृतिर्विज्ञानेश्वरयोगिनः १ अस्मिन्नध्यायेप्रकरणानि उपोद्घातप्रकरण १ ब्रह्मचारिप्र
करणं २ विवाहप्रकरणं ३ जातिविवेकप्रकरणं ४ गृहस्थधर्मप्रकरणं ५ स्नातकप्रकरणं ६ भक्ष्याभक्ष्यप्रकरणं ७ द्रव्यशुद्धिप्रकरणं ८ दानध
र्मप्रकरणं ९ श्राद्धप्रकरणं १० गणपतिकल्पः ११ शांतिप्रकरणं १२ राजधर्मप्रकरणं १३ एवंत्रयोदशप्रकरणानि इतियाज्ञवल्क्यमुनिशास्त्रग
ताविवृतिर्नकस्यविहितावितुषः प्रमिताक्षरापिप्रपुलार्थवतीपरिषिंचतिश्रवणयोरमृतं १



इतियाज्ञवल्क्यस्मृतिमिताक्षरायामाचाराध्याय समाप्त